BIBLIOTHECA INDICA:
A
Collection Of Oriental Works
PUBLISHED BY
THE ASIATIC SOCIETY OF BENGAL
NEW SERIES Nos 1193 1220 and 1238

# THE RASĀRNAVAM

or

The ocean of mercury and other metals and minerals

EDITED BY

PRAPHULLA CHANDRA RAY, D Sc Ph D,
*Professor of Chemistry, Presidency College, and*
*Author of "History of the Hindu Chemistry"*

AND

PANDITA HARISCHANDRA KAVIRATNA,
*Late Professor of Sanskrit Presidency college, Calcutta*

CALCUTTA:
Printed by Hitavrata Chattopádhyáya,
at the Satya Press, 27, Ghose Lane,
1910.

# रसार्णवम्

पारदादिरसोपरसविषयकं तन्त्रम्

श्रीलश्रीयुत-

वङ्गदेशीयासियाटिकसमितेरनुज्ञया

कलिकाता-प्रेसिडेन्सीकालेजे रसायनाध्यापकेन

डि एस्सि — पि एच् डि — उपाधिधारिणा

हिन्दुरसायनेतिहासप्रणेत्रा

श्रीप्रफुल्लचन्द्र-रायेण

तथा

तत्रैव कलेजस्य संस्कृताध्यापकवरेण

श्रीहरिश्चन्द्र-कविरत्नेन

संकलितं संशोधितञ्च ।



कलिकाता-राजधान्याम्

-श्रीपवर्मनि २७ संख्यक-भवने सत्ययन्त्रे

श्रीहितवत्सचट्टोपाध्यायेन मुद्रितम्

पार्कष्ट्रीटस्थ-५७-संख्यकभवनात

प्रकाशितञ्च ।

शकाब्दाः १८१२ ।

# PREFACE

While collecting materials for my *History of Hindu Chemistry* I was very much struck with the wealth of information and chemical knowledge of which Rasárnava is the repository. Thus 'Nature' in its review of the "History of Hindu Chemistry" (Vol I) speaking *of the progress of chemistry in ancient* India quotes two remarkable passages from Rasárnava:

> "Copper yields a blue flame that of tin is pigeon-coloured, that of lead is pale tinted,"

*and as another example*:—

> "A pure metal is that which, when melted in a crucible, does not give off sparks, nor bubbles, nor spurts, nor emits any sound, nor shows any lines on the surface, but is *tranquil* as a gem" (*see pp* 51 52 *vs* 49 52) *

Among the alchemical Tantras Rasárnava holds a unique position and I have referred to it in the following terms in the Introduction to the History of Hindu Chemistry, Vol I, 2nd ed. Intro lxxxiii:

"*It is to be regretted that of the several works quoted by* Mádhava Rasárnava alone seems to have survived to our days. This work is almost unknown in Bengal, and extremely rare even in N India and the Deccan We have been fortunate enough

---

* "Nature", 1903, LXVIII, 51.

to procure a transcript of it in the Raghunátha Temple Library, Kashmir, and another from the Oriental MSS Library, Madras. As one of the earliest works of the kind, which throws a flood of light on the chemical knowledge of the Hindus about the 12th century A D., Rasárnava must be regarded as a valuable national legacy It has, besides the merit of being the inspirer of several works of the Iatro-chemical period, notably Rasaratna-samuchchaya and Rasendrachintámani."

It was thought highly desirable that the full and correct text of this great Tantra be presented to the world, and the Publication Committee of the Bibliotheca Indica have laid me under a debt of obligation by acceding to my request to include it in their series A serious difficulty, however, arose in the way of restoring the text The MSS mentioned above were both faulty and defective I was, however, fortunate in procuring three more transcripts from the libraries of Bikanir, the Deccan and Mysore respectively. The text of the present work is thus based upon a careful collation of five distinct MSS It is a remarkable fact that these MSS, though procured from such widely divergent sources, often concur in repeating the same errors There is a close agreement between the MS of Bikanir and that of Kashmir—possibly they are both derived from the same exemplar The Kashmir MS has been found to be on the whole complete and reliable, and it has been mainly followed The other MSS are more or less fragmentary, but these *disjecta membra* have been of signal service in throwing light upon doubt-

ful passages. Additional help has also been derived from a comparison of several extracts from Rasárnava with which Rasendrachintámani, Rasaratnasamuchchaya, Sarvadarsanasamgraha, Yogatarangini etc abound In spite of all these collateral advantages there was much that could be desired. While the third and concluding part of the present work was in the press, I received a letter from Kaviráj Durgánáráyan Sen Sástri, who had been to Jammu on a professional visit, volunteering his services for the search of rare Sanskrit MSS bearing upon Chemistry and Medicine Among the several MSS which the scholarly instinct of the Kaviraj had hit upon was one entitled Rasakámadhenu Although this work is merely a compilation it proved to me like a God send, as it is full of lengthy extracts from Rasárnava of remarkable textual accuracy Indeed, so material has been the help rendered by Rasakámadhenu that it has been thought advisable to draw up a list of corrections based upon this work and it has been inserted as an appendix

As the Preface appears over my signature alone, I avail myself of this opportunity of expressing my deep obligations to my collaborator, Pandit Harischandra Kaviratna, on whom has mainly devolved the vast labour of going carefully and critically through the text of the MSS He has also drawn up the exhaustive table of contents (अनुक्रमणिका) and the alphabetical index with glossary of technical terms. It is to be hoped that even a casual reader will have no difficulty in finding out the particular information he is in need of.

I have not attempted here any historical review of the Rasárnava. The probable date of the work will be found discussed at length in the History of Hindu Chemistry, Vol. I. Introduction, under the *Tantric Period* and in Vol II, Intro, ch I, under the *age of Nágárjuna and the alchemical Tantras*

P. C Ráy

Presidency College.
October, 1910.

# रसार्णवस्य अनुक्रमणिका ।

द्वादश: पटल:—

## ABBREVIATIONS USED IN THIS WORK.

B = Bikánir MS.
D = Deccan MS
K = Kásmir MS.
M = Madras MS
My = Mysore MS
d.r = different reading
gram = grammatically
inc. = incorrect
र चि = रसचिन्तामणि
र र. स or रस स = रसरत्नसमुच्चय
स द स = सर्व्वदर्शनसंग्रह ।

The following table of errata and variants is mainly based upon the authority of a big MS called रसकामधेनु, compiled by CHUDAMANI MISRA of Sákadwípa —the MS. having been at hand of the editors about the close of printing of the text

## THE TABLE OF ERRATA AND VARIANTS.

| Page | Line | For | Read |
|---|---|---|---|
| १४ | ७ | सदृशो योनो | सदृश, पीनो |
| ४५ | ४ | लोहस्य | लोपस्य |
| ५७ | ८ | फणिविजिह्वा गोजिह्वा | गोजिह्वा फणिजिह्वा च |
| ६० | २ | तोरवल्ली | तोयवल्ली |
| ,, | ७ | कञ्चुनी | कञ्चुकी |
| ,, | ,, | च पिपीलिजम् | चापि पीलुकाम् |
| ७४ | ८ | सर्जक्षारो | सर्जिक्षारो |
| ८३ | (12) note | is incorrect. | we have adopted. |
| ८८ | ४, ६ | गुणवचसम | गुणवयसमं |
| ८७ | २, ५ | मोदितम् | मर्दितम् |
| ,, | ८ | च्छिन्ना | विद्धा |
| ,, | १२ | सूरणकन्दसम्पुटे | सूरणसंपुटेन |
| ८८ | १० | शिलावदारुक धात | शिलावधरसुगन्धाक्तं |

| Page | Line | For | Read |
|---|---|---|---|
| १०१ | ५ | सारयेत् | मारयेत् |
| १०४ | ७ | कोकिलाचयम् | कोकिलत्रयम् |
| १०६ | ५ | लघुकान्दरदो | लघुकान्दरसो |
| ,, | ८ | लोह | मेह |
| ११७ | १ | च पडालकम् | चपलालयम् |
| ,, | ५ | गोरसोनं | गोरसना |
| ११८ | ७ | हयगन्धाङ्घ्रितालकैः | हयगोधीहृतालकैः |
| १२२ | ५ | कटुपञ्चकम् | पटुपञ्चकम् |
| ,, | ८ | षड्बिन्दुर्द्विमुखी तथा षड्विधा द्विमुखास्तथा | |
| १२६ | ११ | श्वेतपीतारुणः सिते | श्वेतपीतारुणासिते |
| १३० | ७ | स्वर्ण | चूर्णं |
| १३१ | १० | च नरीकेश | चामरीकेशं |
| १३२ | १० | लाचारसनिभं | लाचाभं निर्मलं |
| १३४ | ८ | घर्षेत् | चिपेत् |
| ,, | ११ | गते | गर्भे |
| ,, | १२ | तदेतद्द्विष्टिकास्तम्भे | एतदेकाग्निकस्तम्भो |
| १३५ | ६ | वापितं शश्वत् | चापि शतशः |
| ,, | ११ | शिलासत | शिलासत्त्व |
| १३६ | २ | शतसद्गुणे | शतशो गणे |
| १३७ | १ | शिलावाद्यं | शिलावापं |

| Page | Line | For | Read |
|---|---|---|---|
| १३७ | ३ | योपामृष्टस्य | घोपकृष्णस्य |
| ,, | ५ | खादति | वापितं |
| ,, | ,, | विना | विषम् |
| १३८ | ७ | काक | शाक |
| ,, | ८ | कोरण्डकस्य | कौरण्डकेन |
| ,, | १० | च त्रिगुणया | त्रिगुणेनैव |
| ,, | ११ | वापयित्वा | म्नावयित्वा |
| १३९ | १ | द्रव | दृढं |
| १४२ | ११ | माचिकम् | मोचकम् |
| १४८ | ४ | षकम्पय | सकम्पय |
| १४९ | ४ | वसुभण्टादिभि | वसुहट्टादिभि |
| १५३ | ५ | मूलत्वात् | मूलस्थं |
| ,, | ९ | मत्प्रभावं | आत्मभावं |
| १५५ | ४ | लब्धापायो | लब्धमायो |
| १६२ | ६ | वह्नीपुपुङ्खाया | सितेपुपुङ्खाया |
| १६३ | २ | नागमुण्डी | नागशुण्डी |
| ,, | ११ | करकाभ्रकम् | भास्कराभ्रकम् |
| १६५ | १२ | धारयेत् | जारयेत् |
| ,, | १३ | कट्टस्त्र | पट्टस्त्र |
| १६६ | ३ | जायते | जार्यते |

| Page | Line | For | Read |
|---|---|---|---|
| १६६ | ५ | साक्षेन | कोष्णेन |
| ,, | ११ | वासवाक्ष | वेतसाक्ष |
| ,, | १२ | दुग्धोर्णा | दग्धोर्णा |
| १६८ | ३ | मतिमात्मन: | गतिमात्मन: |
| १७० | ३ | क्षणभहस्य | वसुहस्य |
| १७१ | १ | तया रत्नं | रत्नमभ्रं |
| १७१ | ६ | महाजारसमायुक्तं | महाजारप्यमिश्रुक्तं |
| ,, | ८ | पद्मरागप्रलेपेन | पद्मरागं प्रयत्नेन |
| १७२ | १० | पादितं | पाचितं |
| १७४ | ११ | विड़ाग्निना | दृढ़ाग्निना |
| १७५ | १ | चार्द्रपिण्डे नपुंसकम् । | चार्द्रपिण्डेन संयुतः । |
| ,, | २ | चाहयेद् | तृतीये |
| ,, | ३ | दोलायन्त्रविचक्षण: | दोलायन्त्रे विचक्षण: |
| ,, | ६ | यावदार्द्रक | माम्वदार्द्रक |
| १७६ | ४ | महाजारसमन्विताम् | महाजारप्यसंयुताम् |
| १८२ | १ | च पक्षालकम् | चपक्षालयम् |
| १८४ | ७ | सिद्दवक्षौ | सिद्दवक्षौ |
| १८७ | ५ | किवारनाल | चित्वारनाल |
| १८८ | १ | बह्निशिखा | बह्निशिखा |
| १८०. | ८ | यदा लवणभिदि च | कथाते सेन्धवं यदा |

| Page | Line | For | Read |
| --- | --- | --- | --- |
| १८४ | ८ | प्रयोगो | प्रयागो |
| „ | ८ | तस्यासने | तस्य मध्ये |
| २१० | २ | नैव वाहस्तु | न च वा भस्म |
| २२१ | ३ | यथा ग्राह्य | तथा गुह्यं |
| २२४ | १ | तापयेद्भूगतं | तापयेद्भूमित: |
| २४१ | १ | तारताम्राणि | तारपत्राणि |
| २०६ | ४ | प्राकार | प्रकाश |
| २७७ | ८ | त्रप | त्रय |
| २८५ | ८ | द्रव | द्रव्य |
| ३१० | ५ | भूपा | मूपा |
| ३१२ | ३ | रसयैव | रसायासा |
| „ | ४ | मन्थकर्पानलस्तथा | मध कुर्यादयामलम् |
| „ | ८ | जले | मले |
| ३१७ | ५ | वसुभद्द | वसुषद्द |
| ३३८ | ११ | पुष्प रम | पुष्पैरय |
| ३४० | ५ | दीनारी | वाराही |
| ३४२ | ८ | कोकिमा करवोर च | कोकिमाचकवोजच |
| ३४४ | ३ | पिष्टि | सृष्टि |
| ३५३ | ५ | वध्यवन्धी | महारम्भोपरमन्दोद्वन्धी |
| ३६१ | १० | वङ्गतोयं कपाली | वङ्गतोयकपाली |

| Page | Line | For | Read |
|---|---|---|---|
| ३६२ | १ | वैक्रान्तं नागकापाली | वैक्रान्तनागकापाली |
| " | ११ | रविनागं कपाली | रविनागकपाली |
| ३७० | ७ | पुटवेधकम् | यामसाचकम् |
| " | १२ | द्रेगृधर्म्माश्च | द्रयधर्म्मांय |
| ३७१ | ५ | चित्रधर्म्मा | वीतधर्मा |
| " | ७ | धर्म्मग्रहा | धर्मग्रहा |
| " | १२ | कारयेद्दलधर्म्मांय | कारयेत्तद्दलं धर्मे |
| ३८८ | १ | शिग्रुपश्चाङ्गुली | शिग्रुः पश्चाङ्गुली |
| ३८१ | ४ | चीरे चार्कस्य | चीरेणार्कस्य |
| ३८२ | ४ | पाचयेदनुजाम्लेन | पाचयेद्दनुजाम्लेन |
| " | १५ | [धनुज may mean मध्यम.] | |
| ४०८ | ८ | पर्णेषु | पर्णेषु |
| ४१८ | १२ | करविलच | चिरविल्वश्च |

# रसार्णवम् ।



ॐ श्रीगणेशाय नमः ।

## प्रथमः पटलः ।

यस्मिन् सर्व्वं यतः सर्व्वं यः सर्व्वं सर्व्वतश्च यः ।
यश्च सर्व्वमयो नित्यः तस्मै सर्व्वात्मने नमः ॥ १ ॥[1]
कैलासशिखरे रम्ये नानारत्नविभूषिते ।
नानाद्रुमलताकीर्णे शुभसम्बन्धवर्जिते ॥ २ ॥
देवदेवं सुखासीनं नीलकण्ठं त्रिलोचनम् ।
प्रणम्य शिरसा देवी पार्व्वती परिपृच्छति ॥ ३ ॥

श्रीदेव्युवाच ।

देवदेव महादेव कालः कामाङ्गदाहक ।
कुलकौल-महाकौल सिद्धकौलादिनाशन ॥ ४ ॥

---

(1) The portion from the first śloka to the first hemistich of the 54th is wanting in the Bikánir MS. (B) Ślokas from the first to the 43rd are wanting in the Madras MS. (M)

त्वत्प्रसादाच्छ्रुतं सर्व्वं मयैषमवधारितम् ।
यदि तेऽहमनुग्राह्या यद्यहं तव वल्लभा ॥ ५ ॥
सूचिता सर्व्वतन्त्रेषु या पुनर्न प्रकाशिता ।
जीवन्मुक्तिरियं नाथ कीदृशी वक्तुमर्हसि ॥ ६ ॥

श्रीभैरव उवाच ।

साधु साधु महाभागे साधु पर्व्वतनन्दिनि ।
साधु पृष्टं त्वया देवि भक्तानां हितकाम्यया ॥ ७ ॥
अजरामरदेहस्य शिवतादात्म्यवेदनम् ।
जीवन्मुक्तिर्महादेवि देवानामपि दुर्लभा ॥ ८ ॥
पिण्डपाते च यो मोक्षः स च मोक्षो निरर्थकः ।
पिण्डे तु पतिते देवि गर्द्दभोऽपि विमुच्यते ॥ ९ ॥
यदि मुक्तिर्भगक्षीभे किं न मुच्यन्ति[1] गर्द्दभाः ।
अजाय वृषभाश्चैव किन्न मुक्ता गणाम्बिके ॥ १० ॥
तस्मात् संरक्षयेत्[2] पिण्डं रसैश्चैव रसायनैः ।
शुक्रमूत्रपुरीषाणां यदि मुक्तिर्निषेवणात् ॥ ११ ॥
किन्न मुक्ता महादेवि श्वानशूकरजातयः ।
षड्दर्शनेऽपि मुक्तिस्तु दर्शिता पिण्डपातने ॥ १२ ॥
करामलकवत्[3] सापि प्रत्यक्षं नोपलभ्यते ।
तस्मात्तमपि देवेशि मद्भावं कथयामि ते ॥ १३ ॥

---

(1) Kāśmīr Ms (K) reads [illegible], which is incorrect. (2) [illegible] reads [illegible] (3) K reads करामलकम्, which is inaccurate.

शून्यपापो मन्त्रयाजी[1] न पिण्ड धारयेत् क्वचित् ।
देवानामपि देवेशि दुर्लभं पिण्डधारणम् ॥ १४ ॥
किं पुनर्मानुषाणान्तु धरणीतलवासिनाम् ।
धर्म्मे नष्टे कुतो धर्म्मः धर्म्मे नष्टे कुत. क्रिया ॥ १५ ॥
क्रियानष्टे[2] कुतो योगः योगे नष्टे कुतो गति. ।
गतिनष्टे[2] कुतो मोक्षो मोक्षे नष्टे न किञ्चन ॥ १६ ॥
(तेन पिण्डो महाभागे रक्षणीय प्रयत्नतः ॥)[3]

श्रीदेव्युवाच ।
जीवन्मुक्तिस्वरूपं तु देवदेव श्रुत मया ।
तत्प्रत्युपाय मे ब्रूहि यद्यस्ति करुणा मयि ॥ १७ ॥

श्रीभैरव उवाच ।
कर्म्मयोगेन देवेशि प्राप्यते पिण्डधारणम् ।
रसश्च पवनश्चेति कर्म्मयोगो द्विधा मत [4] ॥ १८ ॥
मूर्च्छितो हरते व्याधि[5] मृतो जीवयति स्वयम् ।
बद्ध. खेचरता कुर्यात् रसो वायुश्च भैरवि ॥ १९ ॥[6]
ज्ञानान्मोक्ष. सुरेशानि ज्ञान पवनधारणात् ।

---

(1) K reads शून्यपायामन्त्रजायी which seems to be grammatically incorrect (2) क्रियानष्ट=क्रियानाशे, गतिनष्ट=गतिनाशे [नपुसके भावे क्त] K reads गतौ नष्टे, which is inc. (3) K adds the line within brackets without affixing a serial number to it (4) र द स and रसेन्द्रचिन्तामणि read स्मृत (5) र द स reads हरति व्याधीन् (6) The 18th and the 19th ślokas are quoted in र द स

तत्र देवि स्थिरं पिण्डं यत्र स्थैर्य्ये रसः प्रभुः ॥ २० ॥
अचिराज्जायते देवि शरीरमजरामरम् ।
मनसश्च यथा ध्यानं[1] रसयोगादवाप्यते ॥ २१ ॥
सत्यं स[2] लभते देवि ज्ञानं विज्ञानपूर्व्वकम्[3] ।
तस्य[4] मन्त्राय सिध्यन्ति योऽश्नाति[5] मृतसूतकम् ॥ २२ ॥
यावन्न शक्तिपातस्तु न यावत् पाश[6]कृन्तनम् ।
तावत्तस्य कुतो बुद्धिः[7] जायते मृतसूतके ॥ २३ ॥
मद्यमांसरता नित्यं भगलिङ्गेषु ये रताः ।
तेषां विनष्टबुद्धीनां रसज्ञानं सुदुर्लभम् ॥ २४ ॥
कुलशासनहीनानां सद्दर्शनमकाङ्क्षिणाम् ।
न सिध्यति रसो देवि पिबन्ति मृगतृष्णिकाम् ॥ २५ ॥
गोमांसं भक्षयेद्यस्तु पिबेदमरवारुणीम् ।
कुलीनं[8] तमहं मन्ये रसघ्नमपरेऽधमाः ॥ २६ ॥
न गर्भः संप्रदायार्थे[9] रसो गर्भो विधीयते ।
तेनायं लभते सिद्धिं न सिद्धिः सूतकं विना ॥ २७ ॥

---

(1) र चि reads समाधानम् (2) सत्वञ्च, a variant in र चि. (3) र. चि reads विज्ञान ज्ञानपूर्व्वकम् (4) सत्य, a variant in र चि. which is not appropriate here (5) K reads अश्नुते in the sense of अश्नाति. (6) र. चि reads शक्ति, which is tautological. (7) र चि. reads शुद्धि. (8) अहं तं कुलीनं कुकार्य्यलीनं कदाचार मन्ये, कुलीनशब्दादुत्पन्न कौलीन लोकनिन्दा इत्यर्थ । अन्ये अधमाः न रसघ्न मन्यन्ते इत्यर्थ । (9) We have adopted the reading in र चि.

यावन्न हरबीजन्तु भक्षयेत् पारदं रसम् ।
तावत्तस्य कुतो मुक्तिः कुतः पिण्डस्य धारणम् ॥ २८ ॥[1]
मद्यमांसरताप्रज्ञा[2] मोहिता:[3] शिवमायया ।
जल्पन्ति च वयं मुक्ता यास्यामः शिवमन्दिरम् ॥ २९ ॥
पिण्डधारणयोगे च निस्पृहा मन्दबुद्धयः ।
खण्डज्ञानेन देवेशि रञ्जितं सचराचरम् ॥ ३० ॥
स्वदेहे खेचरत्वं च शिवत्वं येन लभ्यते ।
तादृशे तु रसज्ञाने नित्याभ्यासं कुरु प्रिये ॥ ३१ ॥

श्रीदेव्युवाच ।

अवतारं रसेन्द्रस्य माहात्म्यं तु सुरेश्वर ।
श्रोतुमिच्छामि देवेश वक्तुमर्हसि तत्त्वतः ॥ ३२ ॥

श्रीभैरव उवाच ।

साधु पृष्टं महाभागे गुह्याद्गुह्यतरं त्वया ।
अनुग्रहकरं ध्यानं लोकानामुपकारकम् ॥ ३३ ॥
त्वं माता सर्व्वभूतानां पिता चाहं सनातनः[4] ।
द्वयोश्च यो रसो देवि महामैथुनसम्भवः ॥ ३४ ॥
स्वैरतः सम्भवाद्देवि[5] पारदः कीर्त्तितो मह:[6] ।

---

(1) र चि. exactly quotes this śloka. (2) K reads मद्यमांसरता प्रज्ञा, which is inc. (3) K reads मोहिता, which seems to be an error of the scribe. (4) K reads सनातनम्, which is inc. This śloka (34th) is also found in र. चि. (5) K reads स्वैरतस्य भवोद्देवि, which is absurd, being gram. untenable (6) K reads महा, which is inc.

पारदो गदितो यश्च परार्थं साधकोत्तमैः ॥ ३५ ॥
सूतोऽयं[1] मत्समो देवि मम प्रत्यङ्गसम्भवः ।
मम देहरसो यस्मात् रसस्तेनायमुच्यते[2] ॥ ३६ ॥
दर्शनात् स्पर्शनात् तस्य भक्षणात् स्मरणादपि[3] ।
पूजनाच्च प्रदानाच्च[4] दृश्यते षड्विधं फलम् ॥ ३७ ॥
केदारादीनि लिङ्गानि पृथिव्यां यानि कानि च[5] ।
तानि दृष्ट्वा तु यत्पुण्यं तत्पुण्यं रसदर्शनात् ॥ ३८ ॥
चन्दनागुरुकर्पूरकुङ्कुमान्तर्गतो रसः ।
मूर्च्छितः शिवपूजायां[6] शिवसान्निध्यसिद्धये ॥ ३९ ॥
भक्षणात् परमेशानि हन्ति पापत्रयं रसः ।
तथा तापत्रयं हन्ति रोगान् दोषत्रयोद्भवान् ॥ ४० ॥
दुर्लभं ब्रह्मनिर्वाणं.[7] प्राप्यते परमं पदम् ।
हृद्व्योमकर्णिकान्तस्थ रसेन्द्रस्य महेश्वरि ॥ ४१ ॥[8]
स्मरणान्मुच्यते[9] पापैः सद्यो जन्मान्तरार्जितैः ॥ ४२ ॥
स्वयम्भूलिङ्गसाहस्रै[10] यत्फलं सम्यगर्चनात् ।

---

(1) स द स reads सूतोऽयम् (2) ĸ reads रसमेनं समुच्यते, which gram inc. We have adopted the variant in स द स (3) र चि reads स्मरणात् प्रिये (4) स द स reads पूजनात् रसदानाच्च This variant exactly agrees with that in र चि (5) स द स and र चि read कानिचित् (6) शिवपूजा सा, a variant in र चि (7) र चि read ब्रह्मनिर्वाणं (8) The reading in र चि is as follows —सद्योमकर्णिकान्तस्थ रसेन्द्र परमेश्वरि (9) स्मरन् विमुच्यते, a variant in र चि (10) ĸ reads साहस्रे, which is inc

तत्फलं कोटिगुणित रसलिङ्गार्च्चनाद्भवेत् ॥ ४३ ॥
अधम' खगवादस्तु[1] विलवादस्तु मध्यम.।
उत्तमो मन्त्रवादस्तु रसवादो महोत्तम[2] ॥ ४४ ॥
मन्त्रतन्त्रपरिज्ञाने रसयोगस्य[3] दूषका.[4]।
प्रयान्ति नरक[5] सर्व्वे हित्वा सुकृतसञ्चयम् ॥ ४५ ॥
रसविद्या परा विद्या त्रैलोक्येऽपि सुदुर्ल्लभा[6]।
भुक्तिमुक्तिकरी यस्मात् तस्माद्देया गुणान्वितैः ॥ ४६ ॥[7]
अस्तीति भाषते कश्चित् कश्चिन्नास्तीति भाषते।
आस्तिके तु भवेत्सिद्धि.[8] तस्य सिद्ध्यति भूतले ॥ ४७ ॥
नास्तिकेनानुभावेन[9] नास्ति नास्तीति यो वदेत्।
तस्य नास्ति प्रिये सिद्धिर्जन्मकोटिशतैरपि ॥ ४८ ॥
ब्रह्मज्ञानेन मुक्तोऽसौ पापी यो[10] रसनिन्दक:।

---

(1) M reads खन्यवादस्तु रससार reads मुन्यवाद in place of खगवाद, and चैत्रवाद in place of विलवाद (2) रसवादोत्तमोत्तम, a variant in M, which is gram inc (3) रसो योगस्य, a variant in K, which seems to be inc M reads रसवादस्य (4) K reads दूषक, which is inc M reads भूपका, which deteriorates the sense (5) K reads रसक, which has no sense here (6) M reads च दुर्लभा, which agrees with र चि (7) मुक्ति भुक्तिकरी यस्मात् तस्माज्ज्ञेया गुणान्विता is the reading in र चि (8) अस्तीति भाषते यस्तु, a variant in M (9) नास्तिकेन तु वादेन, a variant in M. (10) M reads पापीयान् सोऽमुक्तो य पापी, a variant in र चि

नाहं त्राता भवे तस्य[1] जन्मकोटि[2]शतैरपि ॥ ४९ ॥
श्वानोऽयं जायते देवि यावत्[3] जन्मसहस्रकम् ।
त्रिकोटिजन्मलक्षाणि मार्जारो जायते रसात् ।
रासभो लक्षजन्मानि लक्षजन्मानि वायसः ॥ ५० ॥[4]
कृमिको लक्षजन्मानि कुक्कुटो[5] जन्मलक्षकम् ।
गृध्रको लक्षजन्मानि यः पापी रसनिन्दकः ॥ ५१ ॥
आलापं गात्रसंस्पर्शं यः कुर्य्याद्रसनिन्दके ।
यावज्जन्मसहस्रं तु स भवेद्दुःखपीड़ितः ॥ ५२ ॥[6]
रसवीर्य्यविपाके च सूतक[7]स्त्वमृतोपमः ।
तेन जन्मजराव्याधीन्[8] हरते सूतकः प्रिये ॥ ५३ ॥
गुरुमाराधयेत् पूर्व्वं विशुद्धेनान्तरात्मना[9] ।
संप्रदायं प्रयच्छन्ति[10] गुरौ तुष्टे मरीचयः ॥ ५४ ॥

---

(1) K reads भवेत्तस्य, so also र चि M reads भवैत्तस्य Both are gram inc The correct reading is either भवाम्यस्य or भवे तस्य (2) K reads जन्मकोटी (3) श्वयोन्यां जायते सोऽपि याति, a variant in M. (4) Slokas 50—52 are wanting in M The sense of रसात् is not accurate (5) कुकट, a variant in K, is palpably an error of the scribe. (6) The hemistich as quoted in र चि is as follows —यावज्जन्मसहस्राणि स भवेत् पापपीड़ित. (7) रसो वीर्य्ये विपाके च पारद, a variant in M, which is gram. inc. (8) M reads जन्मजराव्याधी (9) This charana is wanting in M. (10) M reads सम्प्रदायमप्रच्छन्ति, which has no sense here

गुरुसेवा विना कर्म्म य कुर्य्यान्मूढचेतन:[1] ।
स याति निष्फल कर्म्म[2] स्वप्नलब्धं धनं यथा[3] ॥ ५५ ॥
य. कर्म्म कुरुते दृष्ट तस्य लाभ.[4] पदे पदे ।
कारयेद्रसवादन्तु तुष्टेन गुरुणा प्रिये ॥ ५६ ॥
सिद्धग्रपायोपदेशोऽयमुभयोर्भोगमोचद ।[5]
रसार्णवं महातन्त्र[6]मिद परमदुर्ल्लभम् ॥ ५७ ॥
गोप्य गुरुप्रसादेन लब्ध स्यात् फलसिद्धये ।[7]
लब्धा च[8] रसकर्म्माणि नाहङ्कार समाचरेत् ॥ ५८ ॥
अनुज्ञातश्च गुरुणा लब्धा चाज्ञा रसाङ्कुशोम् ।[9]
भैरवीं तनु[10]माश्रित्य साधयेद्रसभैरवम् ॥ ५९ ॥
एवमुक्ता रसोत्पत्ति. माहात्म्यञ्च[11] सुरेश्वरि ।
तन्ममाचक्ष्व[12] देवेशि किमन्यच्छ्रोतुमिच्छसि ॥ ६० ॥

---

(1) B reads विन which is inc मूढचेतसा a variant in M (2) B and M read जन्म (3) B reads यथा धन M reads स्वप्न लब्धं यथा धनम् which is senseless. (4) B and K read लाभ, which is gram. inc M reads पाप which is absurd (5) B reads मोचयो This hemistich is wanting in M. (6) रसार्णवमिद तन्त्रम् a variant in M (7) This hemistich is wanting in M (8) लब्धा तु a variant in M (9) B reads लब्धा चाच This hemistich is wanting in M (10) B reads भैरवीतनु K reads भैरवीमनु (11) K reads रसोत्पत्ति महात्म्यञ्च which is inc. (12) B reads ममाचक्षि, which is inc. This hemistich is wanting in M

इति श्रीपार्वतीपरमेश्वरसंवादे[1]
रसार्णवे रससंहितायां[2]
तन्त्रावतारो नाम[3]
प्रथमः पटलः ॥१॥

---

## द्वितीयः पटलः ।

श्रीदेव्युवाच ।

रसोपदेशदाता च[1] कथं स्याद्वद मे[2] प्रभो ।
शिष्यश्चैव कथं[3] देव रसानुष्ठानतत्परः ॥ १ ॥

श्रीभैरव उवाच ।

निस्पृहो निरहङ्कारो लोभमायाविवर्जितः ।
कुलमार्गरतो नित्यं गुरुपूजारतश्च यः ॥ २ ॥[4]

---

(1) श्रीपार्वतीपरमेश्वरसंवादे is wanting in M (2) रससंहितायां is wanting in M (3) B reads रसावतारो नाम

(1) K reads रसोपरसदाता We have adopted partly the reading in B and that in M. (2) कथं मम वद, a variant in B and M. (3) K reads रस, which is senseless (4) B reads षट्कपूजा instead of गुरुपूजा This śloka is wanting in M.

दान्तः शिष्योपदेशज्ञ.[1] शक्तिमान् गतमत्सरः[2] ।
धर्मज्ञः सत्यवाक् दक्ष. शीलवान् गुणवान् शुचि ॥ ३ ॥
अनेकरसशास्त्रज्ञो रसमण्डपकोविद ।[3]
रसदोषविधानज्ञो यन्त्रौषधि[4]महारसान् ॥ ४ ॥
रागसख्या[5] बीजकला द्वन्द्व[6]मेलापनं विडम् ।
रञ्जन[7] सारण तैल[8] दलानि क्रामणानि च[9] ॥ ५ ॥
वर्णोत्कर्ष[10] मृदुत्वञ्च जारणा बालवृद्धयो.[11] ।
खेचरीं भूचरीं चैव यो वेत्ति स गुरुर्मत:[12] ॥ ६ ॥
देशकालक्रियाभिज्ञो[13] दयादाक्षिण्यसयुत: ।
लोभमायाविनिर्मुक्तो मन्त्रानुष्ठानतत्पर. ॥ ७ ॥
सामुद्रलक्षणोपेतो गम्भीरो गुरुवत्सल. ।

---

(1) शिष्योविशेषज्ञ , a variant in B । शिष्योविनीतश्च, a variant in M Both are inc (2) K reads विमत्सर which breaks the metre We have adopted the reading in M (3) The portion from धर्मज्ञ to कोविद is wanting in M B reads चित्तवान्, which is inc. (4) B reads दिव्या K reads मन्त्रौषध Both are inc. (5) रागसंख्या, a variant in K. (6) B reads चित्रकला, which is inc. K reads द्वन्द्व which is a palpable mistake. (7) M reads रञ्जक (8) तैला a variant in K. (9) K reads दलानिक्रमणानि च दलानीक्रामणानि च, a variant in M, which seems to be inc. (10) K reads वर्णोत्कर्षं, which is gram. inc. (11) जारणाबालवृद्धये, a variant in K. (12) B has खचरिं, and भूचरिं, which are inc. खचरीचैव यो वेत्ति भूचरीं स गुरुर्मतः a variant in M (13) देशकालक्रियाभिज्ञ, a variant in K, which cannot be reconciled without the word गुरु to be understood.

देवाग्नि[1]योगिनीचक्र कुलपूजारत: सदा ।
शिष्यो विनीतस्तन्त्रज्ञ: सत्यवादी दृढ़व्रत: ॥ ८ ॥[2]
ये नरा.[3] कुम्भकुद्दाल ध्वजशंखादिलाञ्छितै:[4] ।
करै[5]रधिष्ठिता देवि योग्यास्ते निधिसाधने[6] ॥ ९ ॥
बलवन्तो महासत्त्वा:[7] कृष्णरक्त[8]विलोचना: ।
वक्रघोणा:[9] सदा[10] क्रूरा: प्रशस्ता बिल[11]साधने ॥ १० ॥
निर्मांस[12]मूर्द्धपिण्डीकान्[13] रक्तकेशान् गतालसान्[14] ।
कठिनानुष्णपादांश्च[15] धातुवादे[16] नियोजयेत् ॥ ११ ॥
आदौ परीक्षयेद्देवि साधकान्[17] सुसमाहितान् ।
ब्राह्मणान् क्षत्रियान् वैश्यान् शूद्रांश्चानुक्रमेण तु[18] ॥ १२ ॥
जितेन्द्रिया: क्लेशसहा नित्योद्यमसमन्विता: ।

---

(1) K reads देवाग्नी, which is inc. (2) K reads सिद्धो instead of शिष्यो The portion beginning from लोभमायाविनिर्मुक्तो and ending in सत्यवादी दृढव्रत is not to be found in M (3) K reads कुरा (without विसर्ग), which is absurd and inc. (4) B reads लाञ्छनै K reads लक्षणै (5) M reads नरै, which is inappropriate. (6) निधिदर्शने, a variant in M (7) K reads महासत्त्व, which is gram inc. (8) B reads कृष्णारक्त (9) K reads वक्रघोरा (10) सदा, a variant in K, which is meaningless. (11) K reads किल which is a mere expletive. (12) K reads निर्मांसा (13) B reads मूर्द्धपिण्डोक M reads मूर्द्धफलिकान् (14) K reads रक्तकेशाङ्गनासिका (15) K reads कठिनानुष्णपादाय कठिनानुष्ण य, an incomplete variant in M (16) K reads धातोर्वादे (17) M reads साधनान्, which is gram inc. (18) ब्राह्मण क्षत्रियं वैश्य शूद्र चानुक्रमेण तु, a variant in K. M has च instead of तु

शूराश्च ज्ञातविद्याश्च प्रशस्ताः[1] साधका प्रिये ॥ १३ ॥
* रसदीक्षाविहीना ये[2] मोक्षलक्षणवर्जिताः ।
विघ्नारकाः पापरता[3] वर्जयेत्तान्[4] प्रयत्नतः ॥ १४ ॥
दुश्चारिणी दुराचारा निष्ठुरा कलहप्रिया ।
बह्वाशिनी[5] च दुश्चित्ता कोटराक्षी च निर्दया ।
रसनिन्दाकरी या च तां नारीं परिवर्जयेत् ॥ १५ ॥
ईदृशीभिर्वरारोहे[6] सम्पूर्णं क्षितिमण्डलम् ।[7]
न तादृशी[8] भवेन्नारी यादृशी रसबन्धकी ॥ १६ ॥[9]
काकिणी कोकणी नारी तथैव काञ्चिकाचिनी ।[10]
कृष्णपक्षे ऋतुमती सा नारी काकिणी स्मृता ॥ १७ ॥
उभयपक्षे ऋतुमती सा नारी कोकणी मता[11] ॥ १८ ॥
शुक्लपक्षे ऋतुमती सा नारी[12] काञ्चिकाचिनी ॥ १९ ॥

---

(1) K reads विज्ञेयाः. The portion commencing from the 14th śloka and ending in the first hemistich of the 45th is wanting in M. (2) K reads नरा दीक्षाविहीनाश्च (3) K reads भवेच्चान्यायरताः. (4) K reads वर्जये तान्, which is gram. inc. (5) B reads बकाशिनी (6) K reads ईदृशी, which is palpably inc. (7) K has सम्पूर्णंक्षितिमण्डले. (8) K reads यादृशी च (9) Cf रसरत्नसमुच्चय, Chap VI ślokas 34—38. (10) काकणी काञ्चिकाचीति कोकणी, a variant in K, which we have not adopted for its deficiency in words and defect in metre. 1-1. B reads कालिणी in lieu of काकिणी (11) उभयपक्षे ऋतुमती सा कोकणी, a variant in K, where some words are wanting (12) This word is not found in K. The ślokas 17—19 are not found in B.

नवयौवनसम्पन्ना सुरूपा चारुहासिनी ।
सूक्ष्मकेशा तु या नारी चोराहारप्रिया सदा ॥ २० ॥
प्रियालापकरो[1] नित्य शिवशास्त्रकथाप्रिया ।
पद्माकार[2] मुख यस्या दृष्टिरिन्दीवराकृतिः ॥ २१ ॥
दशना वज्रसदृशा. प्रवालसदृशोऽधरः[3] ।
यस्या. पयोधरौ देवि तुङ्गपीनौ समावुभौ ॥ २२ ॥
अश्वत्थपत्रसदृशो योनो यस्या भग समः ।[4]
यत्पादौ मांसलौ स्निग्धौ वर्त्तुलावल्परोमकौ[5] ॥ २३ ॥
श्यामा च मध्ये श्यामा च[6] तन्वी भक्तिपरा[7] शिवे ।
पद्मिनी सा तु विज्ञेया प्रसवा[8] मृगलोचना ॥ २४ ॥
पूर्णिमायाममायां वा पर्वे पर्वे रजस्वला ।
षड्भेदा काकिणी नाम्ना पूर्वप्रोक्ता रसप्रदा ॥ २५ ॥[9]
यस्य तुष्टो महादेवस्तस्य सिद्धो[10] रसायने ।
तयैव[11] देवदेवेशि रसकर्माणि कारयेत् ॥ २६ ॥

---

(1) प्रियालापकरि a variant in K., which is inc. (2) K. has [illegible] (3) B reads प्रवालसदृशाधर K. has [illegible], which seems to be inc. (4) [illegible], a variant in [illegible] (5) [illegible] a variant in L (6) [illegible], a variant in K. (7) [illegible] a variant in K., which is inc (8) L reads [illegible] (9) The 25th śloka is not found in B (10) B reads [illegible] K. reads [illegible], which is gram. inc. (11) K. reads [illegible]

तस्य हि निर्म्मला बुद्धिर्निश्चिता रससाधने ।
तस्माद्गुरुश्च शिष्यश्च पूर्व्वोक्तः सिद्धिभाग्भवेत् ॥ २७ ॥

श्रीदेव्युवाच ।

ईदृशैर्लक्षणैः[1] नारीं कुतः प्राप्नोति साधकः ।
यत्र रूपं महादेव लक्षणं नात्र विद्यते ॥ २८ ॥
लक्षणं विद्यते यत्र भावना नात्र विद्यते ।
अथवा रूपहीनाया रूपं केन प्रवर्त्तते ॥ २९ ॥
लक्षणत्रितयं[2] कुत्र त्वया दृष्टं महेश्वर ।
तदेतज्ज्ञायते येन तमुपायं वद प्रभो[3] ॥ ३० ॥

श्रीभैरव उवाच ।

शृणु देवि परं गुह्यं यत्सुरैरपि दुर्लभम् ।
पितुः सदाशिवाज्जातं[4] जन्म यश्चण्डिकोदरे ॥ ३१ ॥
तासां बुद्धिर्भवेद्देवि निर्म्मला रससाधने ।
दापयेत्त्वरितामन्त्रं जपेत्त[5] दर्पवर्जिता[6] ॥ ३२ ॥
लक्षमन्त्रं[7] जपेद्या तु जायते सा सुलक्षणा ।
बद्ध्वा तु खेचरीं मुद्रां जपेत् फेट्कारभैरवीम् ॥ ३३ ॥

---

(1) ईदृशीं लक्षणां, a variant in K, which is gram untenable [Here उपलक्षितां is to be understood] (2) K reads लक्षणं त्रितयं (3) K reads तदुपायं वद मे प्रभो, where the word मे can be left out in order to keep up the metre (4) The reading in K is gram inc., the text runs thus —पितुः सदाशिवाशाय तस्मायायश्चिकोदरे (5) [Here सा is to be understood] • (6) न जपेद्दर्पवर्जिता is the reading in B (7) B reads लक्षमात्र

ममैयं[1] चण्डिका माता जन्म च त्रिपुरान्तकात्[2] ।
कालिकार्हं समुद्भूतास्मीदृशं संस्मरेत्तु[3] सा ॥ ३४ ॥
भूतं भव्यं भविष्यञ्च त्रैलोक्ये[4] कथयेत्तु सा ।
सहायास्तादृशास्तस्य यादृशी भवितव्यता ॥ ३५ ॥[5]

श्रीदेव्युवाच ।

देवदेव महादेव समस्तज्ञानभाजन ।
रसदीक्षां तु पृच्छामि साधकानां हिताय वै ॥ ३६ ॥

श्रीभैरव उवाच ।

शृणु भैरवि यद्भावम्[6] अपूर्वं वर्णयामि ते ।
रसदीक्षाविधानन्तु[7] तस्मान्निगदितं शृणु ॥ ३७ ॥
यत्र राजा नयपरो[8] बलवान् धर्मतत्परः ।
मन्त्री च धर्मतत्त्वज्ञो भक्तिश्रद्धासमन्वितः ॥ ३८ ॥
तत्रेदं कारयेत् कर्म रसबन्धं रसायनम् ।
जना माहेश्वरा यत्र तत्र स्थाने[9] तु कारयेत् ॥ ३९ ॥

---

(1) After the 33rd śloka we find a hemistich in B, which runs thus —तदा प्रवर्त्तते भावो जन्म करोति काहुत, we have rejected it, since the 34th śloka serves the same purpose K reads ममैव (2) K reads करान्तका, which is inc. (3) K reads सस्मरेतु सा, which is gram inc. (4) B has भूतं च भवद्भविष्य च which mars the metre K reads त्रैलोक्य which is inc. (5) After the 35th śloka we have the following hemistich in B —रसदीक्षां विधानेन तस्मात् कर्म समाचरेत् । We have rejected it, because रसदीक्षाविधान is not yet explained. (6) K reads बद अन्दि (7) Cf. र र स Chap VI ślokas 12—66 (8) K reads नयवरो (9) K reads माहेश्वराणाम प्रसङ्गे तु

कारवेद्विजने स्थाने पशुर्यत्र न विद्यते ।
सुगुप्ते सुघने स्थाने सर्व्वबाधाविवर्ज्जिते ॥ ४० ॥
प्राकार[1]परिखोपेते कपाटार्गलरक्षिते ।
एकान्ते निर्म्मले हृद्ये नानापुष्पद्रुमान्विते ॥ ४१ ॥
हंसकारण्डवाकीर्णे चक्रवाकोपशोभिते ।
दिव्यौषधिगणोपेते सजले श्यामशाद्वले[2] ॥ ४२ ॥
कुमुदोत्पलकह्लार कदलीषण्डमण्डिते ।
चित्रिते[3] भवनोद्याने कारयेत् परमेश्वरि ॥ ४३ ॥
तन्मध्ये देवदेवेशि मत्तवारणसंयुतम्[4] ।
वातायनसमोपेतमूर्द्धनिर्गामिधूमकम्[5] ॥ ४४ ॥
रक्त[6]पताकासंयुक्तं सर्व्वोपकरणं तथा ।
प्रविभक्तौषधितुषा[7]काष्ठारण्योत्पलालयम्[8] ॥ ४५ ॥
समालिखितदिग्देवं[9] समर्च्चितविनायकम्[10] ।

---

(1) K reads प्रकार, which seems to be an error of the scribe.
(2) K reads स्वात् समाद्वले, wherein the first word (स्वात्) is redundant.
(3) B reads चित्रते (4) यन्मोद्वार तु कारयेत्, a variant in K, which seems to be unconnected (5) K reads निष्काम instead of निर्गामि.
(6) B reads रक्ता K reads रक्त, which is inc. (7) K reads प्रविभक्तौषधौदय, wherein दय has no meaning (8) काष्ट यक्षोत्पमालक, a variant in K, wherein the word काष्ट is an error of the scribe. काष्ठारण्योपलायम, a variant in M, wherein some of the terms are inc.
(9) This sloka (46th) is wanting in B K reads दिग्दृव्य, which has no clear meaning (10) M reads विनाकम्, which is a palpable error of the scribe

प्रतिष्ठितमुमेशाभ्यां[1] लोकपालैश्च रक्षितम् ॥ ४६ ॥
निर्म्मापयेदेकतलं द्वितलं वापि मण्डपम्[2] ।
अथ पक्षे सिते देवि चन्द्रताराबलान्विते[3] ॥ ४७ ॥
पुण्ये तिथौ मुहूर्त्ते च[4] लग्ने सौम्यग्रहेक्षिते ।
स्नातः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ॥ ४८ ॥
मधुसर्पिर्दधिक्षीरतिलैः संपूज्य बालिकाः[5] ।
कपिलागोमयालिप्ते हिरण्यकलसावृते ॥ ४९ ॥[6]
यवसिद्धार्थकास्तीर्णे[7] गन्धमाल्योपशोभिते ।
सचेष्टिकाभिः रचिते[8] करपीठे सुरेश्वरि[9] ॥ ५० ॥
शिलापट्टं समुत्कीर्य शिलापट्टागर्ते प्रिये ।
न्यासं रसाङ्कुशेनैव कृत्वाङ्गुलिहृदादिषु[10] ॥ ५१ ॥
रसलिङ्गं न्यसेत्तत्र हेम्ना च[11] सहितं प्रिये ।

---

(1) प्रतिष्ठितोमामहेश, a variant in M, which breaks the metre. (2) B reads मण्डप. M reads मण्डपम् which is an error of the scribe. (3) चन्द्रताराबले सति, a variant in B and K. We have adopted the reading in M. (4) पुण्यतिथौ मुहूर्ते तु, a variant in K, which seems to be unconnected. (5) M reads बालक. (6) The portion from स्नात to कलसावृते is wanting in M. (7) B reads यव सिद्धार्थकास्तीर्णे, M reads यवसिद्धार्थकास्तीर्णे, both the readings seem to be erroneous. (8) सचेष्टकाभिरचिते, a reading in B. सचेष्टकाभि सुरचिते, a reading in M. (9) K reads करपदे. करपीठे सुरेश्वरि a variant in M, which has no clear sense. (10) न्यासं रसाङ्कुशेनैव कृत्वा ग्रङ्गुलिहृदादिषु a variant in K. अङ्गुलिहृदादिषु, a reading in M, which seems to be erroneous. (11) K reads चाम्भो.

ॐ ह्रीं श्रीं[1] सूतराजस्य मूलमन्त्र उदाहृतः ॥ ५२ ॥
तस्मिन् रसाङ्कुशीं देवीं[2] मूलेनावाहयेत्प्रिये ।
चतुरस्र तु दिक्पालान्[3] पूजयित्वा बहिः क्रमात् ॥ ५३ ॥
नन्दिनञ्च महाकालं भृङ्गिरीटं महाबलम्[4] ।
कुम्भकर्णञ्च सुग्रीवं भृङ्गोकञ्च[5] दृढायुधम्[6] ॥ ५४ ॥
द्वारे चतुर्षु विन्यस्य पूजयेद्दक्षवामयोः ।
शक्तिं पूर्व्वेऽभि[7]संपूज्य स्कन्दमाग्नेयगोचरे[8] ॥ ५५ ॥
दक्षिणस्यां ततो रुद्रं[9] पवनं नैर्ऋते तथा[10] ।
शिवं पश्चिमभागे तु पावकं वायवे न्यसेत् ।
उमामुत्तरभागे तु व्यापकं चेशगोचरे[11] ॥ ५६ ॥
लेपिका चेपिका चैव क्षारिका रञ्जिका तथा[12] ।
लोहटी बन्धकारी च भूचरी मृत्युनाशिनी[13] ॥ ५७ ॥
विभूतिः खेचरी[14] चैव दश दूत्य, क्रमेण च[15] ।

---

(1) श्रीं श्रीं ह्रीं, a variant in M　(2) B reads रसाङ्कुशी　M reads रसाङ्कुशं देवी, which is grammatically inc　(3) चतुर॰ दिशदिकपालान्, a variant in M　(4) M reads महोबल　(5) B reads भङ्गकञ्च　M reads भृङ्गाङ्कञ्च　(6) K reads दृढायुधम् which has no clear sense　(7) B reads पूर्वेऽपि　M reads शक्तिं पूर्वे च　(8) B reads मारुतम्.　(9) K reads भद्रं　(10) K reads दक्षिणे　(11) B reads चेत् इशगोचरे　(12) B has क्षारिका रञ्जिका तथा　K has लेपिका चेपिका चैव रञ्जिका रञ्जिका तथा　(13) लोहटी बन्धकारी च भूतमृत्युविनाशिनी, a variant in K.　(14) विभूति खेचरी, a variant in K.　(15) दशदूत्यक्रमेण च, a reading in M, which is grammatically inc.

प्रतिष्ठितसुमेरुाख्या[1] लोकपालैश्च रचितम् ॥ ४६ ॥
निर्मापयेदेकतलं द्वितलं वापि मण्डपम्[2] ।
श्रथ पद्मे सिते देवि चन्द्रताराबलान्विते[3] ॥ ४७ ॥
पुण्ये तिथौ मुहूर्ते च[4] लग्ने सौम्यग्रहेक्षिते ।
स्नातः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ॥ ४८ ॥
मधुसर्पिर्दधिक्षीरतिलैः संपूज्य बालिकाः[5] ।
कपिलागोमयालिप्ते हिरण्यकलसावृते ॥ ४९ ॥[6]
यवसिद्धार्थकाकीर्णे[7] गन्धमाल्योपशोभिते ।
सवेदिकाभिः रचिते[8] कारपीठे सुरेश्वरि[9] ॥ ५० ॥
शिलापट्टं समुत्कीर्य शिल्पापट्टार्गलं प्रिये ।
न्यासं रसाङ्कुशेनैव कृत्वाङ्गुलिच्छदादिषु[10] ॥ ५१ ॥
रसलिङ्गं न्यसेत्तत्र हेम्ना च[11] सहितं प्रिये ।

---

(1) प्रतिष्ठितामरेश, a variant in M, which breaks the metre.
(2) B reads मण्डप. M reads मण्डपम् which is an error of the scribe.
(3) चन्द्रतारबले सति, a variant in B and K We have adopted the reading in M
(4) पुण्यतीर्थे मुहूर्ते तु a variant in K, which seems to be unconnected.
(5) M reads पालक
(6) The portion from स्नात to कलसावृते is wanting in M
(7) B reads यव सिद्धार्थका कीर्णे, M reads यवसिद्धार्थकाकीर्णे, both the readings seem to be erroneous.
(8) सवेदिकाभिरचित, a reading in B सवेदिकाभि रचिते, a reading in M.
(9) K reads कारयत् कारपीठे सुरेश्वरि a variant in M, which has no clear sense
(10) न्यासं रसाङ्कुशेनैव कृत्वाङ्गुलिच्छदादिषु a variant in K. कृत्वाङ्गुलिच्छदादिषु, a reading in M, which seems to be erroneous
(11) K reads [illegible]

ॐ क्रीं थीं[1] सूतराजस्य मूलमन्त्र उदाहृतः ॥ ५२ ॥
तस्मिन् रसाङ्कुशो देवी[2] मूलेनावाहयेत्प्रिये ।
चतुरस्रे तु दिक्पालान्[3] पूजयित्वा वहि क्रमात् ॥ ५३ ॥
नन्दिनञ्च महाकालं भृङ्गिरीटं महाबलम्[4] ।
कुम्भकर्णञ्च सुग्रीवं भृङ्गीकञ्च[5] दृढायुधम्[6] ॥ ५४ ॥
द्वारे चतुर्दश विन्यस्य पूजयेद्दक्षवामयोः ।
शक्रं पूर्व्वेऽभि[7] संपूज्य स्कन्दमाग्नेयगोचरे[8] ॥ ५५ ॥
दक्षिणस्यां ततो रुद्र[9] पवनं नैर्ऋते तथा[10] ।
शिवं पश्चिमभागे तु पावकं वायवे न्यसेत् ।
उर्मांसुत्तरभागे तु व्यापकं चेशगोचरे[11] ॥ ५६ ॥
क्षेपिका चेपिका चैव चारिका रञ्जिका तथा[12] ।
लोहटी वन्यकारी च भूचरी मृत्युनाशिनी[13] ॥ ५७ ॥
विभूतिः खेचरी[14] चैव दश दूत्य. क्रमेण च[15] ।

---

(1) क्रों थां ह्रीं, a variant in M (2) B reads रसाङ्कुशी M reads रसाङ्कुशं देवी, which is grammatically inc (3) चतुर॰ स्रेऽदिकपालान्, a variant in M (4) M reads मनोबलं (5) B reads भृङ्गकञ्च M reads भृगाङ्कञ्च (6) K reads दृढायुधम् which has no clear sense (7) B reads पूर्व्वेऽपि M reads पूर्व्व पूर्व्वे च. (8) B reads मायरम्. (9) K reads भद्र (10) K reads वह्नि (11) B reads चेत् समाचरेत् (12) B has क्षमिका रञ्जिका तथा K has क्षेपिकां चेपिकां चैव रचकां रञ्जिकां तथा. (13) लोहटी वन्यकारी च भूतमृत्युविनाशिनी, a variant in K. (14) विभूतिं खेचरी, a variant in K. (15) दशदूत्यक्रमेण च, a reading in M, which is grammatically inc.

पूज्यास्त्वष्टदले[1] पद्मे अष्टाधस्तु दलेषु च[2] ॥ ५८ ॥
माक्षिको विमल[3] शैल[4]चपलो रसकस्तथा ।
सस्यको[5] गन्धतालौ च पूर्व्वादिक्रमयोगत ॥ ५९ ॥
अष्टादशभुजा रुद्रा[6] पञ्चवक्त्रास्त्रियम्बका[7] ।
चन्द्रार्द्धशोभिमुकुटा[8] नीलग्रीवा वृषध्वजा[9] ॥ ६० ॥
स्वस्ववर्णधरा[10] सर्व्वेऽप्यष्टविद्येश्वरास्तथा[11] ।
पूजनीया महेशानि द्वितीयेऽष्टदलाम्बुजे[12] ॥ ६१ ॥
कर्णिकायान्तु पूर्व्वादिपूर्व्व[13] शक्तिचतुष्टयम् ।
मानिनी हैमशक्तिश्च परा शक्तिर्मला स्मृता[14] ।
अपरा वज्रशक्तिश्च कान्तिश्चैव परापरम्[15] ॥ ६२ ॥

---

(1) पूज्या चाष्टम is the reading in K which is a palpable error (2) पुष्पार्न्तु दलषु च a variant in B कर्द्ध चाध दलषु च a variant in M (3) K reads माक्षिको विमल (4) M reads चैल which seems to be erroneou (5) सस्यको is the reading in K and सस्यके is that in M Both a e incorrect (6) K reads रुद्रा (without विसर्ग). (7) पञ्चवक्त्र त्रियम्बका (without विसर्ग a variant in K. (8) M reads मकुटा. (9) K reads वृषध्वजा (without विसर्ग (10) The portion f om the first to the f hemistich of the 94th is wanting in B स्वस्व वर्णधरा a variant in K, which is absurd (11) विद्येश्वरास्तु ते a variant in K. विद्येश्वरस्तथा a reading in M which is inc (12) M reads महेश्वरि द्वितीये चाष्टदले (13) पूर्व्व च पूर्व्व is the reading in M which seems to be incorrect. (14) K reads स्मृते which is incorrect. This cha ana and the next a e wanting in M (15) ... a variant in K

मध्ये तासाञ्च शक्तीनां सम्बिष्टं रसभैरवम् ।
शुद्धस्फटिकसंकाशं पञ्चवक्त्रं त्रियम्बकम्[1] ॥ ६३ ॥
ज्वलत्पिङ्गोग्रनेत्रञ्च[2] ज्वलज्जिह्वाननं तथा ।
ज्वलद्भ्रुवं[3] ज्वलत्क्लेशं दुःप्रेक्ष्यं[4] प्रेतविष्टरम् ॥ ६४ ॥
जटामुकुटसंयुक्तं चन्द्रार्द्धकृतशेखरम्[5] ।
व्याघ्रचर्म्मधरं नागोपवीतं वृषभध्वजम्[6] ॥ ६५ ॥
अष्टादशभुजं देवमीषदट्टहसिताननम् ।
द्वात्रिंशार्णेन मनुना पूजयेत् सकलं शिवम् ॥ ६६ ॥
रसेश्वरस्य मन्त्रञ्च कथ्यमानं निबोध मे[7] ॥ ६७ ॥

ॐ ह्रीं क्रीं[8] रसेश्वराय महाकालाय महाबलायाघोर-
भैरवाय[9] वज्रघोर[10] क्रोधकङ्काल घ्रौः घ्रुः[11] ॥ ६८ ॥
तस्योत्सङ्गे महादेवीं रत्नाभरणभूषणाम्[12] ।

---

(1) M reads त्र्यम्बकम्, which is the correct form of त्रियम्बकम्. (2) K reads ज्वलत्पिङ्गायनेत्रञ्च. (3) M reads ज्वलद्भ्रुव. (4) M reads दुष्प्रेक्ष्य, which is an alternative form of दुःप्रेक्ष्य. (5) M reads चन्द्रार्द्धकृतशेखरम् (6) M reads नाग उपवीत वृषध्वजम्, wherein the former is grammatically incorrect. (7) In lieu of this hemistich M has only रसेश्वरमनुम् which ought to be रसेश्वरमनुः (8) M reads चीम् फीम् येम् भ्रम्. (9) M reads भैरव. (10) वज्रघोर is the reading in M. The correct form would be वज्रघोराय and क्रोधकङ्कालाय. (11) M reads घ्रौ घ्रा । After this, is added इति मनुः This मनु contains 32 letters (द्वात्रिंशद्वर्णैः), the last two (घ्रौ घ्रु) being excepted. (12) रत्नाभरणभूषिताम्, a variant in K.

उत्तप्तहेमरुचिरां पीतवस्त्रां त्रिलोचनाम् ॥ ६८ ॥
श्वेतचामरयोर्मध्ये मुक्ताच्छत्रेण शोभिताम्[1] ।
अङ्कुशं चाक्षमालां च दधतीं दक्षहस्तयोः ॥ ७० ॥
पाशाभये च वामाभ्यां[2] चन्द्रार्द्धकृतशेखराम् ।
रसाङ्कुशीं[3] महादेवीं नीलग्रीवां कृपामयीम् ॥ ७१ ॥
पूजयेद्रससिद्ध्यर्थं विद्यया पञ्चबीजया ।
वाग्भवं भुवनेशोत्थं[4] श्रीबीजञ्च सुरेश्वरि ॥ ७२ ॥
मादनं[5] शक्तिबीजञ्च—विद्या[6] परमदुर्लभा ।
धूपदीपैश्च नैवेद्यै[7] पुष्पताम्बूलचन्दनैः ॥ ७३ ॥
शान्तिपाठस्य निर्घोषैः[8] स्तोत्रमङ्गलनिस्वनैः[9] ।
घण्टाटङ्कारसंयुक्तैः पूजां कृत्वा यथाविधि ॥ ७४ ॥
अघोरेण बलिं दद्यात् सर्व्वविघ्नोपशान्तये[10] ।

---

(1) K reads मुक्ताच्छत्रोपशोभितां which is a palpable error of the scribe (2) वरदं भयहस्त द्वौ a variant in K पाशभयौ च वामाभ्यां a variant in M where in the first term is grammatically incorrect. (3) रसाङ्कुशां a reading in M (4) K reads भुवनेशं तं; भुवनेशिश a variant in M which ought to be भुवनेशोत्थ (5) K reads मदनं (6) K reads विद्यय which is incorrect. This charana "विद्या परमदुर्लभा" is the remark made by Siva to draw special attention of his consort. This विद्या is to be communicated by the गुरु to his शिष्य (see śloka 82) (7) धूपनीपैः सुमैर्वेद्यैः a variant in K (8) K reads शान्तिपाठेन निर्घोषैः M reads शास्त्रपाठस्य निर्घोषैः We have adopted the above reading after collating all the texts (9) K reads निःस्वनैः (10) K reads सर्व्वविघ्नस्य शान्तये ।

भूतेभ्यो यक्षरक्षभ्यो[1] पिशाचेभ्यश्च यत्नतः ॥ ७५ ॥
अघोरमन्त्रसंयुक्त[2]मोङ्काराद्विनमोऽन्तकम् ।
सर्व्वकर्म्माकरं[3] देवि विघ्नोपद्रवनाशनम्[4] ॥ ७६ ॥
यथाशक्ति जपित्वा तु विद्यामेव रसाङ्कुशीम् ।[5]
कुण्डं विधाय देवेशि योनिचक्रं[6] समेखलम् ॥ ७७ ॥
तत्राज्यतिलसंयुक्तं होमं कृत्वा क्रमेण तु ।
कलशं स्थापयेद्देवि पय.पूर्णं फलान्वितम्[7] ॥ ७८ ॥
पञ्चरत्नसमोपेतं वासोभिः परिवेष्टितम् ।
तत्राष्टादश[8]विद्याभिरभिमन्त्र्य पृथक् पृथक् ॥ ७९ ॥
गन्धपुष्पादिभिः पूर्णं[9] पल्लवैरुपशोभितम् ।
अर्घ्यपात्रञ्च[10] संपूज्य वर्द्धन्याभ्युच्य साधकम्[11] ॥ ८० ॥
शतमष्टोत्तरं चैवमर्घ्यपात्रोदकेन[12] तु ।

---

(1) Both K and M read यक्षरक्षेभ्य, which is grammatically incorrect, the term being रक्षस् and not रक्ष (2) M reads सयुक्तं, which is incorrect (3) सर्व्वकर्मांकर, a variant in M, which is meaningless (4) K reads विघ्नोपद्रनाशनम्, which is palpably an error of the scribe M adds here after the 76th śloka अघोरेभ्योऽथ घोर इति मन्त्र नमोऽन्तकम्, which we have rejected as it is redundant. (5) K reads विद्यांविद्यां विद्या तु, which has no clear sense (6) योनि चक्र, a variant in K. (7) पय पूर्णकमान्वितम् a reading in M. (8) K reads तत्राष्टदल. (9) M reads कोर्णं (10) K reads बलिपात्रञ्च (11) Both K and M read वर्द्धन्यभ्युच्य, which is incorrect M reads साधक, which is grammatically untenable. (12) चैव मर्घ्यपात्रोदकेन, a variant in K.

अभिषिच्य[1] विधानेन कुम्भतोयेन मन्त्रवित् ॥ ८१ ॥
विद्यामुपदिशेद्देवि पाठयेद्रससाधकम्[2] ।
कुमारीयोगिनीयोगि[3]साधकांश्च यथोचितैः[4] ॥ ८२ ॥
तर्पयेदन्नपानैश्च[5] जागरं तत्र कारयेत् ।
एवंविहितदीक्षस्तु[6] साधकः सुरनायिके ॥ ८३ ॥
महाभूतमयीं तत्र[7] वर्णपञ्चकसंयुताम्[8] ।
पञ्चबीजात्मिका[9] विद्या प्राणायामात्मसूत्रके[10] ॥ ८४ ॥
मुद्रां रसाङ्कुशीं बध्वा लक्षमेकं जपेत्प्रिये ।
तस्य सिध्यति देवेशि निर्विघ्नं रसभैरवः ॥ ८५ ॥
प्रणवादिनमोऽन्तस्तु तर्पणान्ते जपः परः[11] ।
अहिंसा चन्दनं[12] सत्यं पुष्पमस्तेयधूपनम्[13] ॥ ८६ ॥
ब्रह्मचर्य्यं महादीपमप्रतिग्रहघण्टिकाम्[14] ।

---

(1) K reads अभिषिच्य, which is incorrect (2) K reads साधक, which is incorrect M reads शासन, which conveys a different idea. (3) K reads यागी, which is erroneous. (4) M reads साधकाय यथो चित wherein the first term is incorrect. (5) दानपानैश्च, a variant in M (6) K reads दीक्षा तु, which is erroneous. (7) M reads तन्त्रं, which means dependent. (8) वर्णात्म तां महात्मिकं, a variant in M (9) पञ्च बद्यात्मिकां, a reading in K, which is absurd (10) K reads प्राणाय मात्मसूत्रक. M reads प्राणायामात्मसूत्रके We have adopted the above reading after collating all the texts (11) K reads परम् प्रणवादिनमोन्त सार्द्धबाले जप परः, a variant in M (12) K reads चन्दन (13) M reads धूपकम (14) M reads कर्णिकाम

पायसान्नं[1] महेशानि सर्व्वभूतदयात्मकम्[2] ॥ ८७ ॥
संग्रह्याराधयेद्देवो[3] स भवेत्सिद्धिभाजनम्[4] ।
सहस्रं वा शतं वापि त्रिसन्ध्यं संजपेदिमाम्[5] ॥ ८८ ॥
अस्या आज्ञा[6]प्रसादेन जायते खेचरो रसः ।
दिव्यौषध्यश्च तस्यैव सिध्यन्ति सुरवन्दिते ॥ ८९ ॥
अनङ्कुशं समारुह्य वने मत्तगजं यथा ।
तथाऽरसाङ्कुशाभिज्ञो[7] रसेन्द्रं प्राप्य सीदति[8] ॥ ९० ॥
विद्यया[9] सह मन्तव्यं गुरोः[10] सत्सम्प्रदायिन ।
रसप्रयोगजातन्तु[11] सर्व्वतः सिद्धिमिच्छता ॥ ९१ ॥
अथ प्रश्नावताराय[12] पूर्व्वोक्तं रसभैरवम् ।
समाहितमना ध्यायेत् तदालीनं[13] समाचरेत् ॥ ९२ ॥

---

(1) K reads पायसानि, which seems to be incorrect. (2) सर्व्व भूतमयात्मकम्, a reading in M (3) M reads देवि, which makes the sentence incomplete (4) भवेत् is the reading in M. सिद्धि-भाजन is the reading in K. (5) त्रिसन्ध्या सञ्जपेदिमाम्, a variant in M, wherein the first term is incorrect (6) अस्याज्ञया is the reading in K, which is not correct. (7) रसाङ्कशाकुशं, a variant in K. In this reading no nominative to सीदति is to be found. (8) K reads सिध्यति, which is absurd (9) K reads मया, which is senseless. (10) K reads गुरो (without विसर्ग) which is erroneous (11) M reads रसप्रयोगजातम् which is incorrect [जात is neuter] (12) आपतयाय is the reading in M, which is an evident error of the scribe (13) M read तदालीन

अनाहते[1] ब्रह्मरन्ध्रे मन कृत्वा निरामये।
करन्यास पुरा[2] कृत्वा अङ्गन्यासमनन्तरम्[3]।
यथाशक्ति जपेन्मन्त्र रसेन्द्रस्य समाहित ॥ ८३ ॥
चतुष्कोण पुन[4] कृत्वा मध्य षट्कोणमण्डलम्[5]।
हस्तमात्र विहस्त वा तण्डुलैर्विमलैर्लिखेत् ॥ ८४ ॥
सुगन्धैलेपिते स्थाने[6] पूजयेच्चन्दनादिभि ॥ ८५ ॥
कर्णिकाया[7] न्यसेद्देवि[8] पूर्व्वोक्त रसभैरवम्।
षटकोणे[9] देवताषटक महाकालादि विन्यसेत् ॥ ८६ ॥
महाकाल महाबल[10]मघोर वज्रघोरकम[11]।
न्यसेत् क्रोधञ्च कङ्काल मालामन्त्रै समर्च्चयेत् ॥ ८७ ॥

ॐ ह्रीं क्रौं ह्रूँ ह्रू ह्रीं ह्री ह्री ह्रू हु फट्—रसेश्वराय महाकालभैरवाय रौद्ररूपाय कृष्णपिङ्गललोचनाय। अवतर २ अवतारय २ जल्प २ जल्पय २ शुभाशुभ कथय २ कथापय २ महारचा कुरु २ रससिद्धि देहि ॥ इति मालामन्त्रा ॥[12]

---

(1) अनाहती a variant in M which is incorrect. (2) M reads पुन (3) The portion commencing from this charana and ending in the third charana of the 94th sloka is not found in K (4) B reads पुरा (5) K and M read मण्डले (6) B reads सुगन्धि लेपितस्थाने (7) M reads कर्णिकाया which seems to be an error of the scribe (8) न्यसेद्दवं a reading in K (9) M reads षट्कोण which is nc (10) B and K read महाबल this reading we have adopted though it makes a defect in metre because we see the same word occurring afterwards M reads महाबाल (11) वज्रवीरकम् is the variant in M (12) B reads क्रौं ह्रीं क्रैं ... ह्रीं ह्रीं ह्रीं ह्र फट्।

ॐ महाकालभैरवाय हृदयाय नमः। ॐ महाबलभैरवाय शिरसे स्वाहा। ॐ अघोरभैरवाय शिखायै वौषट्। ॐ वज्रभैरवाय कवचाय हुम्। ॐ क्रोधभैरवाय नेत्राय वौषट्। कङ्कालभैरवाय अस्त्राय फट्। सर्व्वत्र स्वाहान्तम्। एवं षडङ्गन्यासाः।[1] एवमङ्गुलीन्यासान् कुर्य्यादादौ। एते षडङ्गे जने च मूलमन्त्राः॥

एवं न्यासाचरैः कूटे[2] गन्धपुष्पैः समर्च्चयेत्[3]।
पूर्णकुम्भं[4] न्यसेन्मध्ये शरावं तण्डुलैः सह॥ ८८॥
तस्योपरि घृतदीप[5] वर्त्तीं मन्त्रैश्च[6] मन्त्रवेत्॥ ८८॥
समानीय कुमारीं तु कुमारं वा सुशोभनम्।[7]

एकद्वित्रिचतुःप्रस्थ[1] यथालाभं समानयेत् ।
गन्धपुष्पैर्धूपदीपैः नैवेद्येन च पूजयेत् ॥ १०० ॥
एकैकस्या[2] न्यसेन्मन्त्रं हृदयाद्याय[3] देवताः ॥ १०१ ॥
ततो निरीक्ष्य[4] तद्दीपं[5] सर्व्वास्तत्र[6] कुमारिकाः[7] ।
पश्यन्ति देवता दीपे कुमाराय[8] शुभाशुभम् ।
सिद्धिं वा[9]प्यथवासिद्धिं कथयन्ति कुमारिकाः[10] ॥ १०२ ॥
प्रश्नावतारं शास्त्रेति[11] रसकर्म्मणि सञ्चरेत्[12] ॥ १०३ ॥
यः पुरा देवदेवेशि रसेन्द्रे[13] भावितात्मवान् ।
सप्तजन्म[14] मृतो जातो न त्यजेद्रसभावनम्[15] ॥ १०४ ॥
एवं शुभाशुभं ज्ञात्वा देवतानुग्रहान्वितः ।

---

(1) एकद्विचितुप्रस्थ is the reading in K, which is not correct. (2) B reads एकैक स्यात्. M reads एकैकस्य (3) हृदयादीय is the reading in M. They are mentioned in p. 27. (4) M reads निरीक्ष्य. B and K read निरीक्ष, which seems to be inc (5) B reads तद्दाप K reads तद्दीप, which is grammatically untenable (6) B reads सर्व्वं ते च K reads सर्व्वा तत्र, which is a palpable mistake (7) B and M read कमारका. (8) ते कुमारा is the reading in B and M. (9) B and M read चा. (10) B and M read कुमारका. (11) प्रश्नावतारम् शास्त्र is the reading in M, which seem to be incorrect. (12) B reads कर्म्मकर्माणि. M reads रसकर्म्मणि सञ्चरन्, which is incorrect (13) या पुराद्‌वदर्वाश रसेन्द्र is the reading in M, which is incorrect. (14) B and M read वान. (15) B reads रसभावन रसभाविनम् is the variant in M, which has no sense here

मण्डपे पूर्व्वदेवेशी[1]मर्च्चयित्वा रसाङ्कुशीम्[2] ॥ १०५ ॥
आचार्य्यमपि संपूज्य धूपस्रक्‌चन्दनादिभिः ।
अघोरेण वलिं दत्त्वा ततः कर्म्म समाचरेत् ॥ १०६ ॥
औषध्यौ मण्डपे[3] प्राच्या रसस्वेदोऽग्निगोचरे[4] ।
दक्षिणस्यां लौहमारो नैर्ऋत्यां पेषणादिकम्[5] ॥ १०७ ॥
द्रुतिक्रिया तु[6] वारुण्यां वायव्ये धमनं प्रिये ।
वर्णोत्कर्षस्तु[7] कौवेर्य्याम् ऐशान्यां रसवेधनम्[8] ॥ १०८ ॥
आसनन्तु गुरोर्मध्ये[9] निवेश्य[10] सुरनायिके ।
नियामनादिकं कर्म्म क्रामणान्तं[11] वरानने ।
रसाङ्कुशेन मन्त्रेण कर्त्तव्यं साधकेन तु ॥ १०९ ॥

---

(1) B and K read देवि, which is incorrect. (2) B reads रसाङ्कुशा. M reads रसाङ्कुशम्. Both are grammatically erroneous. (3) औषधी मन्त्रवित्, a variant in K, wherein मन्त्रवित् has no final verb to govern (4) B reads रस स्वेदोऽग्निगोचरे K reads रसे स्वेदोऽग्निगोचरे. (5) K reads पेषिण दक, wherein पेषिण is incorrect. The correct form is पेषण [दक=water.] (6) B reads द्रुतिक्रिया तु, which ought to be spelt द्रुतिक्रिया तु K reads कर्षो कुर्पौत्ति M reads घृतिक्रिया तु. (7) वर्णोत्कर्षस्तु, a reading in K (8) ईशान्यां रसधमनम्, a variant in B and M. Cf रसरत्नसमुच्चय, Chap VII, ślokas 3—5. (9) आसनन्तु गुरुमध्ये, a reading in K, which is incorrect (10) K reads निवेद्य, which is not accurate here (11) कर्म्मणान्त, a reading in M, which seems to be incorrect. But K has a different reading in the 5th. Patala, śloka 1, नियामिकादिक कर्म्म क्रमणान्त

यः पुरा देवदेवेशि वर्णितो[1] रसभैरवः ।
सद्योजातं तस्य जानु[2] वामदेवन्तु गुह्यकम्[3] ॥ ११० ॥
अघोरं हृदयं[4] तस्य वक्त्रं तत्पुरुषं स्मृतम्[5] ।
यावद्[6]भ्रूमध्यमीशानमर्द्धचन्द्रं ललाटकम्[7] ॥ १११ ॥
बिन्दुर्देवेशि तस्योर्द्ध्वे बिन्दोरूर्द्ध्वे स्थितो नदः[8] ।
ललाटशिरसोर्मध्ये[9] शक्तिस्तत्रैव संस्थिता ॥ ११२ ॥
व्यापिनी[10] ब्रह्मरन्ध्रस्था[11] तस्योर्द्ध्वे तून्मना[12] भवेत् ।
उन्मना उन्मनोभावम्[13] उन्मनापदमव्ययम् ॥ ११३ ॥

---

(1) M reads वर्णत, which is incorrect (2) K reads जानौ सद्योजातस्य जानु, a variant in M wherein जानु is an error of the scribe (3) K reads गुह्यके वामदेवेन्तु गुह्यकम्, a reading in M, wherein the first term is erroneous. (4) K and M read अघोरहृदय, which is not correct (5) B reads तत्पुरुष स्मृत K reads तत्पुरुष स्मृतम् (6) B and M read अवेद्, which is not appropriate (7) K reads ललाटके M reads अर्द्धचन्द्रललाटकम् The final verb ध्यायेत्, stated in the śloka 116 is to be understood here (in the ślokas 110-111) by अनुवृत्ति connection (8) The 112th śloka is not found in B, except the initial and final words, i. e. बिन्दुर्दे and संस्थिता बिन्दोरूर्ध्वस्थितो नदः, a variant in M, which is incorrect [Here the correct word is नाद as is stated in the [illegible] Patala I "नादबिन्दुकला [illegible]" (9) ललाट शिरसो मध्ये, a reading in M (10) K reads व्यापिनि M reads व्यापिनी Both are incorrect (11) M reads ब्रह्मरन्ध्रगा (12) B and K read उन्मना (13) B and M read उन्मन उन्मनोभावम् [उन्मन = उन्मनपद]

गन्धकस्तालकः[1] शिला सौराष्ट्री खग[2]गैरिकम् ।
राजावर्त्तश्च[3] कङ्कुष्ठम्[4] ग्रष्टा[5] उपरसा स्मृताः[6] ॥ ५६ ॥
श्वेतद्वीपे पुरा देवि सर्व्वरत्नविभूषिते ।
सर्व्वकाममये रम्ये तीरे चीरपयोनिधे[7] ॥ ५७ ॥
विद्याधरीभिर्मुख्याभिरङ्गनाभिश्च योषिते ।[8]
सिद्धाङ्गनाभिस्त्रिदशाभिस्तथैवाप्सरसां गणैः ॥ ५८ ॥
देवाङ्गनाभिरन्याभिः क्रीडिताभिः पुरा प्रिये ।
गीतनृत्यैर्विचित्रैश्च वाद्यैर्नानाविधैस्तथा ॥ ५९ ॥
एव[9] सक्रीडमानायास्तवाभूत् प्रसृतं[10] रजः ।
तद्रजोऽतीव सुश्रोणि[11] सुगन्धि सुमनोहरम्[12] ॥ ६० ॥
रजसयातिबाहुल्यात् वासस्ते रक्तता[13] ययौ ।
तत्र त्यक्ता तु तद्वासः[14] सुस्नाता[15] चीरसागरे ॥ ६१ ॥

---

(1) B reads here गन्धक तालक But it writes afterwards गन्धक and तालक (2) M reads खर here but we see afterwards in B and M काशीश instead of खग or खर [Vide sloka 81] (3) B and M read at first राजावर्त्त, but afterwards राजावर्त्त (4) B reads कङ्कुष्ट (5) B has अष्टा, which is grammatically inc (6) B reads स्मृत (7) B has पयोनिध (without विसर्ग), which is incorrect. (8) The hemistich and the next three are not found in M (9) M reads बहु (10) B reads प्रसृत, which is neither accurate nor metrical (11) M has सुश्रोणि, which is gram. inc (12) B reads सुमनस्करम् (13) B reads पक्वतां (14) B has तद्वस्त्र. (15) M reads स्नाता च

हृता[1] देवाङ्गनाभिस्त्वं सुरैश्चापि पुरं[2] गता ।
ऊर्म्मिभिस्ते रजोवस्त्रं[3] नीतं मध्ये[4] पयोनिधेः ॥ ६२ ॥
एवं ते शोणितं भद्रे प्रविष्टं क्षीरसागरे ।
क्षीराब्धिमथने चैतदमृतेन सहोत्थितम् ।
निजगन्धेन तान् सर्व्वान् हर्षयद्देवदानवान्[5] ॥ ६३ ॥
ततो देवगणैरुक्त[6] गन्धकाख्यो भवत्वयम् ॥ ६४ ॥
रसस्य बन्धनार्थाय जारणाय[7] भवत्वयम् ।
ये गुणाः पारदे प्रोक्ता[8]स्ते चैवात्र भवन्त्विति ॥ ६५ ॥
इति देवगणैः प्रीतैः पुरा प्रोक्तं सुरेश्वरि ।
तेनायं गन्धको नाम विख्यातः क्षितिमण्डले ॥ ६६ ॥
स चापि त्रिविधो देवि शुकचञ्चुनिभो वरः ।
मध्यमः पीतवर्णः स्याच्छुक्लवर्णोऽधमः प्रिये ॥ ६७ ॥
कारञ्जैरण्डतैलेन द्रावयित्वाजदुग्धके[9] ।
सिञ्चेद्भृङ्गरसनिर्यासे[10] त्रीन् वारांस्तं[11] पृथक् पृथक् ॥ ६८ ॥

---

(1) B reads हृता, which is not accurate. (2) B has सुरैश्च पुरा, which has no sense. (3) ऊर्मिभी मध्यन्नीतवस्त्र, a variant in M. (4) This term is wanting in M. (5) Both B and M read सर्व्व-दानवान्, which creates tautology. (6) M has देवगणैर्युक्त, which appears to be incorrect (7) M reads जारणार्थाय (8) B has पारदे प्रोक्ता, which is gram inc M has पारदेऽप्युक्ता (9) द्रावयित्वा च दुग्धके, a variant in M. (10) M reads सिञ्चेद्भृङ्गनिर्यासे, wherein the middle term seems to be inaccurate. (11) Both B and M read त्रीन् वारान्, which is gram inc.

ज्वालिनीबीजचूर्णेन मत्स्यपित्तेय भावयेत् ।
भृङ्गाम्भसा वा सप्ताहं भावित. चालितोऽम्भसा[1] ॥ ६८ ॥
तापितो बदराङ्गारै.[2] घृताक्ते लोहभाजने ।
आवर्त्तितश्च मृद्वग्नौ घृताक्त[3]कर्पटोपरि ॥ ७० ॥
क्षिप्र भृङ्गस्य निर्यासे[4] चालितो गन्धको हित.[5] ॥ ७१
गन्धको हि स्वभावेन रसरूप [6] स्वरूपत: ।
गन्धक शोधयेत् चोरे[7] शृङ्गवेररसे तथा[8] ॥ ७२ ॥
रसे च[9] भृङ्गराजस्य निम्बुकस्य रसे तथा[10] ।
शोधित. सप्तवाराणि[11] गन्धको जायतेऽमल:[12] ॥ ७३ ।

॥ इति[13] गन्धकशुद्धि: ॥

तालक. पटल. पिण्डो द्विधा तत्राद्य उत्तम: ।
कुष्माण्ड तु शत[14] वारान् तालकं स्वदयेद्बुध. ॥ ७४ ॥

---

(1) B has भावित चालितम्भसा M has भावित्तं चालिताम्भसा Both the readings seem to be inaccurate (2) तापीतबदराङ्गारै, a variant in M which is evidently an error of the scribe (3) M reads घृताक्ते (4) निक्षिप्य भृङ्गनिर्यासे a variant in K. M reads भृङ्गस्य सारेण (5) M reads हितम् which is grammatically inc, being an adjective to गन्धक. (6) B reads रस रूप, which is not correct (7) M has चारे (8) K. has शृङ्गवेररसैस्तथा. M has शृङ्गिवेररसे तथा (9) K. reads रसग which is inc. (10) निम्बकस्य रसे तत, a variant in K. निम्बकस्य रसे तथा a variant in M (11) All the texts have this reading, which is not authorised by any lexicon The correct form is सप्तवारान् (12) M reads गन्धका निर्मला भवत्. (13) This term is wanting in B (14) M. reads शतान्, which is gram. inc.

स्नुक्‌चोरकटुकालाबु[1]-रसयोः सप्तधा पृथक् ।
तिलसर्षपशिग्रूणि लाक्षा च लवणं गुड़ः[2] ।
टङ्कणं च युतैर्ह्यतैः[3] तालकं भूधरे द्रवेत्[4] ॥ ७५ ॥
व्याधिघातफलक्षारं[5] मधु[6]कुष्माण्डकं तथा ।
द्रवैः[7] पुनर्नवोद्भूतैः सप्ताहं मर्दयेद्बुधः ॥ ७६ ॥
दत्त्वा पादांशकं[8] सर्व्वं ततः पातनयन्त्रके ।
दद्यात् पुटं गजाकारं[9] पतेत् सत्त्वं सुतालकात्[10] ॥ ७७ ॥

॥ इति तालकशुद्धिः ॥[11]

रक्ता शिला[12] तु गोमांसे लुङ्गाम्लेन विपाचिता[13] ।
(त्रिपुष्पेण पृथग्भाव्या शिला तालकवद्द्रवेत् ।)[14]

---

(1) B has स्नकचीरकटुकालाबु which is unintelligible, as well as defective in metre K has स्नुह्यर्कचीरकटुकौ M has स्नक्‌चीरकटकालाम्बु (2) M has गुडम् (3) B reads युत ह्येते, which is gram incorrect M reads युत ह्येतै (4) K reads धमेत् M reads न्द्रवत्, which is inc (5) व्याधिघातबल्लवार, a variant in B व्याधीद्दतफल्लवार, a variant in K M has an incomplete charana—व्याधिघातप रक्ष (6) B reads मधु M has not this term ( ) B reads द्रावै (8) M reads पादात् कम (9) M reads गम्पकाद्यात् (10) पतेत् सर्व सुतालकम्, a variant in M (11) This is wanting in B and M (12) K reads रक्तां शिलां, which seems to be gram inc (13) लुङ्गाम्ले त्रिविपाचिता, a variant in B. लुङ्गाम्लेन तु पाचिते, a variant in K. लुङ्गाम्लेन विपाचितम्, a variant in M The last two readings are gram incorrect. (14) This hemistich is found only in M

ता रक्तपीतपुष्पाणां रसे पित्तैश्च भावयेत् ॥ ७८ ॥

॥ इति शिलाशुद्धिः ॥[1]

सिता कृष्णा च सौराष्ट्री चूर्णखण्डालिका च सा[2] ॥७९

गोपित्तेन[3] शतं वारान् सौराष्ट्रीं भावयेत्ततः ।

धमित्वा पातयेत् सत्त्वं क्रमेण चातिगुह्यकम् ॥ ८० ॥

॥ इति सौराष्ट्रीशुद्धिः ॥[4]

काशीसं त्रिविधं शुक्लं[5] कृष्णं पीतमिति प्रिये ॥ ८१ ॥

काशीसं चूर्णयित्वा तु कासमर्दरसेन च ।

राजकोशातकीतोयैः[6] पित्तैश्च[7] परिभावयेत् ॥ ८२ ॥

॥ इति काशीसशुद्धिः ॥[8]

गैरिकं त्रिविधं रक्तहेमकेवलभेदतः[9] ।

रक्तवर्गरसक्वाथपित्तै[10]स्तद्भावयेत् पृथक् ॥ ८३ ॥

अनेन क्रमयोगेन गैरिकं विमलं धमेत्[11] ।

क्रमात् सितश्च[12] रक्तश्च सत्त्वं पतति शोभनम् ॥ ८४ ॥

॥ इति गैरिकशुद्धिः ॥[13]

---

(1) This is wanting in B and M. K has इति सम शिलाशु ॥ ।
(2) M reads चर्जित सालिकाचम which is unintelligible. (3) M has गोविसन which is inc. (4) This is wanting in B and M. (5) K has का शस विध शुक्ल M has कासीसकी शुक्ल Both are incomplete. (6) K reads कोशतकी. T reads ताउ (7) M reads पत्रैश्च (8) This is wanting in B and M. (9) इम ब सितभेन्त a variant in M. (10) M reads विते which is inc. (11) K reads भवत् (12) M reads पीतश्च (13) This is wanting in B and M.

राजावर्त्तो द्विधा देवि गुलिका[1]चूर्णभेदत ॥ ८५ ॥
तच्चूर्णं देवदेवेशि महिषीक्षीरसंयुतम्[2] ।
विपचेदायसे पात्रे गोघृतेन विमिश्रितम्[3] ॥ ८६ ॥
तच्चूर्णितं सुरेशानि[4] कुनटीघृतमिश्रितम्[5] ।
सौभाग्यपञ्चगव्येन पिण्डीबद्धं तु[6] कारयेत् ।
धमितं खादिराङ्गारैः[7] सत्त्वं मुञ्चति शोभनम् ॥ ८७ ॥

॥ इति राजावर्त्तशुद्धिः ॥[8]

कङ्कुष्ठं विद्रुमच्छायं[9] तच्च सत्त्वमयं प्रिये[10] ॥ ८८ ॥

॥ इति कङ्कुष्ठम् ॥

सूर्य्यावर्त्तोदककणा-वज्रिशिग्रुशिफारसैः[11] ।
कदली[12]कन्दसारेण बन्ध्याकोशातकीरसैः[13] ॥ ८९ ॥

---

(1) K reads गुटिका (2) K reads मिश्रित (3) M reads स्नमिश्रितम् (4) M has सद्वेशानि (5) B reads कुनटि K reads सगुनम् M reads कुनटी, which appears to be the error of the scribe. (6) B reads पिण्डीबध तु K reads पिण्डिबद्ध तु M reads पिण्डबद्धन्तु. (7) धमित खदिराङ्गारे, a variant in B K reads धामित M reads धमित (8) This is wanting in B and M We find the 84th sloka in all the MSS after इति राजावर्त्तशुद्धि, but looking at the context, we placed the same after the 83rd sloka. (9) M reads विद्रुमच्छाया, which is gram inc (10) B reads यच्च K reads सत्व तु यत्प्रिये (11) B has वज्रशिग्रु K has नवसौव M has शिफारसैः. (12) K reads कदली (13) K reads कोशतकी, which seems to be incorrect.

काकमाची[1] देवदालो[2] वज्रकन्दरसैस्तथा[3] ।
एभिर्व्यस्तै[4] समस्तैर्वा चाराम्लस्नेहसैन्धवै. ।
महारसाश्चोपरसा शुद्धिमायान्ति भाविता. ॥ ८० ॥
लाक्षालवणसौभाग्य-धूमसार[5]कटुत्रयम् ।
शिग्रुमूल[6] मधूच्छिष्ट पथ्यागुग्गुलुधातव[7] ॥ ८१ ॥
सर्जिकासर्जनिर्यास[8] पिण्याकोर्णासमन्वितम्[9] ।
पारावतमलक्षुद्रमत्स्यद्राविकपञ्चकम्[10] ॥ ८२ ॥
तिलसर्षपगोधूम माषनिष्पावचिक्कसम्[11] ।
छागक्षीरेण[12] सयुक्त वज्रपिण्डो तु कीर्त्तिता[13] ॥ ८३ ॥
अनया वज्रपिण्ड्या तु पञ्च[14]माहिषयुक्तया ।
महारसा मोदितास्तु पञ्चगव्येन भाविता ॥ ८४ ॥
कोष्ठे[15] खराग्निना ध्माता[16] सत्त्व मुञ्चन्ति[17] सुव्रते ।

---

(1) K has काचमाचि which appears to be incorrect (2) M reads देवताली (3) B and M have रसेन च. (4) M reads एभर्निय (5) M reads द्रुमसार (6) K reads शिग्रमूल M reads शिग्रमूल (7) पथ्यां गुग्गलधातव, a variant in B, wherein the first term is incorrect M reads सर्जिकम् in tead of धातव (8) B has सर्जिनियास M has सर्जनियामपिण्याको (9) पिण्याकोर्णासमन्विता a variant in K M has an incomplete charana—नागसमन्वितम् (10) B reads पचम (11) M has निष पविक्कस (12) K reads छागी चीरण (13) वज्रपिंडो तु कीर्त्तिता an incorrect variant in K वज्र, पिण्डोति कीर्त्तित, a variant in M, wherein the last term is gram inc. (14) M reads फम (15) K reads काम M reads काष्ठ (16) B and M read ध्मात (17) K and M read मुञ्चति

एवं शिलाभ्यो जीवेभ्यो मृद्भ्यः सत्त्वं प्रजायते[1] ॥ ८५ ॥

॥ इत्युपरसा अष्टौ ॥[2]

एवं चोपरसाः प्रोक्ताः शृणु[3] लोहान्यतः परम् ॥ ८६ ॥
सुवर्णं रजतं ताम्रं तीक्ष्णं वङ्गं भुजङ्गमम्[4] ।
लोहन्तु[5] षड्विधं तच्च यथा पूर्वं तदक्षयम् ॥ ८७ ॥
तत्रादितः सुरेशानि सारं लोहद्वय स्मृतम्[6] ।
साधारणी तीक्ष्णशुल्वे[7] वङ्गनागौ[8] तु पूतिकौ[9] ॥ ८८ ॥
रसजं[10] क्षेत्रजं चैव लोहसंकरजं[11] तथा ।
त्रिविधं[12] जायते हेम चतुर्थं नोपलभ्यते ॥ ८९ ॥
रक्ताभं पीतवर्णं च द्विविधं[13] देवि काञ्चनम् ।
दाहे[14] रक्तं सितं छेदे निकषे[15] कुङ्कुमप्रभम् ॥ १०० ॥
सगौरवं मृदु[16] स्निग्धं तार[17]शुल्वविवर्जितम् ।

---

(1) B reads प्रदापयत्. M reads प्रतापयत्  (2) This is wanting in B and M  (3) M reads शृणु, which is incorrect  (4) ताम्रा षड्भुजगमा, a variant in K तीक्ष्ण वर्ण तु भङ्गमा, an incorrect variant in M [The term नाग=भुजङ्गम=शीष.]  (5) तु is wanting in K  (6) K reads मत  (7) B reads तिक्ष्णशुल्वे. K reads साधारणो, which is gram inc.  (8) M reads नागवङ्गौ  (9) B has पूनिकौ K has यूनिकौ M has पौतिकौ We have adopted the above reading after collating all the texts  (10) M reads रजकः.  (11) M has लोहसङ्करजौ, which is gram inc.  (12) M reads त्रिविधौ, which is not gram correct  (13) M has द्विविध  (14) M reads दाये  (15) K reads निकषे  (16) B has गुरु, which seems to be a tautology  (17) B reads श्रम

हेम षोडशवर्णाढ्यं शस्यते देहलोहयोः ॥ १०१ ॥
मृत्तिका[1] मातुलुङ्गाम्ले [2] पञ्चवासरभाविता[3] ।
सभस्मलवणा[4] हेम शोधयेत् पुटपाकतः ॥ १०२ ॥
शुक्लञ्च तारकृष्णञ्च[5] द्विविधं रजतं प्रिये ।
गुरु स्निग्धं मृदु श्वेतं तारमुत्तममिष्यते ॥ १०३ ॥
नागेन क्षारराजेन द्रावितं शुद्धिमिच्छति ।
तारं त्रिवारं निक्षिप्तं पिशाची[6]तैलमध्यतः ॥ १०४ ॥
ताम्रं च द्विविधं प्रोक्तं रक्तं[7] कृष्णं सुरेश्वरि[8] ।
घनघातसहं स्निग्धं[9] रक्तपत्रं[10] मृदूत्तमम्[11] ॥ १०५ ॥
स्नुह्यर्कक्षीरलवण[12] क्षाराम्लपरिलेपितम्[13] ।
ताम्रपत्रं च निर्गुण्डी रसमध्ये तु ढालयेत्[14] ॥ १०६ ॥

---

(1) M reads मृत्तिका which is gram inc. (2) B has मातुलुङ्ग ल्ते which is incorrect (3) K reads पञ्चवार सुभावित M reads पञ्चवासरम विताम्, which is gram incorrect (4) M has सभस्मलवण which is not correct (5) B reads तापकृष्णञ्च K reads तायकृष्णञ्च (6) B has पिश्चाच which is unintelligible (7) रक्त is wanting in B thus destroying the metre (8) K reads सुरेश्वरि, which is a palpable error of the scribe (9) घनघातसहाख्य a variant in K घनवातसहस्निग्ध a variant in M where in वात seems to be inc. (10) K reads रक्तपात. M reads रक्तपात्र (11) Both B and K read मृदूत्तमम् which is inc (12) B reads क्षारलवण The letter क after ह्य is wanting in M (13) K reads परिपचित M reads विरवपितम् (14) निर्गुण्डीरसमध्ये चालयेत् a variant in M

रोहणं वाजरं चैव[1] तृतीयं च पडालकम्[2] ।
इति तीक्ष्णं त्रिधा तत्र कान्त[3]लोहमिति स्मृतम् ॥ १०७ ॥
नीलं कृष्णमिति स्निग्धं[4] सूक्ष्मधारमयः[5] शुभम् ।
गुडूची[6] हंसपादी च नक्रमालः[7] फलत्रयम्[8] ॥ १०८ ॥
गोपालकी[9] गोरसोन[10] तुम्बुरुर्लोहनिघ्नकः[11] ।
एषां रसे ढालयेत्तत्[12] गिरिदोषनिवृत्तये ॥ १०९ ॥
त्रपु च[13] द्विविधं ज्ञेयं श्वेत[14]कृष्णविभेदतः ।
श्वेतं[15] लघु मृदु स्निग्ध-मुत्तमं वङ्गमुच्यते ॥ ११० ॥
नागस्त्वेकविधो[16] देवि शीघ्रद्रावी[17] मृदुर्गुरुः ॥ १११ ॥
महिषस्यास्थिचूर्णेन वापात्तन्मूत्रसेचनात् ।
वङ्गं शुद्धं भवेत्तद्वत्[18] नागो नागास्थिमूत्रतः[19] ॥ ११२ ॥

---

(1) M reads राजक चैव　(2) M reads पटोलकम्　(3) B reads कान्तौ　M reads कान्ती　(4) नील कृष्ण लतिस्निग्ध, a variant in K.
(5) K has सूक्ष्मधारमय　M has सूक्ष्मधारमयश. The terms मय and मयश् are not correct.　(6) B reads गुडूची　M reads गन्चुी　(7) B and K read नक्रमाला　M reads नक्रमाल.　(8) M has फलत्रयम्, which seems to be the error of the scribe.　(9) B reads गोपालिकौ　K reads सेफालिका　(10) All the texts read गोरसानां, wherein the sixth case-ending cannot be accounted for　(11) K has तुतुरुलोहविघ्नक॰. M has तुम्बुरोहच निष्ककम्.　(12) M reads ढालयेतत्　(13) K reads त्रपुय　(14) B and M read सित　(15) K reads सित.
(16) M has नागमेकविध　(17) K reads शीघ्रद्रावि　(18) K reads भवेद्यौ.　M reads भवेत्सितत्　(19) The term नागा is wanting in B　K has वापास्थिमूत्रत, which is incomplete as well as incorrect.

गौरीफलानि[1] तुरको रजनी तुम्बुरूणि च[2]।
कुबेराक्षस्य वोजानि मल्लिकायाश्च सुन्दरि ॥ ११३ ॥
पलाशशुष्कापामार्ग[3] क्षारस्नुक्क्षीरयोगतः[4]।
सप्तधा परिवापेन शोधयन्ति भुजङ्गमम्[5] ॥ ११४ ॥
स्नुही[6]क्षीरसमायोगात् वङ्गं[7] चावापयेत्ततः ॥ ११५ ॥
स्नुह्यर्कक्षीरहलिनी कञ्चुकी[8]कन्दचित्रकैः।
गुञ्जाकरञ्जधुर्त्तूर[9] ह्यगन्धाद्रितालकैः[10] ॥ ११६ ॥
नक्तमालेङ्गुदीशक्र[11] वारुणीमूलसयुतैः।
पिष्टैर्माहिषतक्र तु[12] सप्तराचोषितैस्ततः।
निषेकः सर्व्वलोहाना मल हन्ति न संशय.[13] ॥ ११७ ॥
देवदालोफलरज. स्वरसैर्भावितं मुहुः।

(1) B has गौरीफलानीत्. M has गौरीफलम्नी. Both the readings seem to be incorrect (2) रजनि तु करविच च, an incorrect variant in K. M reads रजनी instead of रजनी (3) पलाश शुष्कापामार्ग a variant in B, which seems to be erroneous (4) क्षारस्नुकक्षीर योगत, a variant in K, which destroys the metre. (5) M reads भुज ङ्गमा, which is gram incorrect (6) B reads स्नुहू. M reads स्नुहे Both are unintelligible. (7) M reads पाक (8) K has कञ्चुको, which appears to be the error of the scribe (9) B reads धत्तूर K reads धर्त्तूर M reads धुधूर (10) B has तालकैः K has ति ins ead of त्रि, which is not correct. (11) K reads नक्तमाले ङ्गुदीशक्र which is gram inc. M reads वक्र instead of शक्र (12) M reads तक्रेस्तु (13) M reads निषकत, which is a tautology

द्रावयेत् कनकं वापात्[1] भूयो न[2] कठिनं भवेत् ॥ ११८ ॥
अखिलानि च सत्त्वानि[3] द्रावयेत्तत्प्रभावतः[4] ॥ ११९ ॥
सप्ताश्च सुरगोपस्य सुरदाल्याय[5] यद्रजः ।
आवापात् कुरुते देवि कनकं जलसन्निभम् ॥ १२० ॥
मण्डूकास्थिवसाटङ्क-हयलालेन्द्रगोपकैः[6] ।
प्रतिवापेन कनकं सुचिरं तिष्ठति द्रुतम्[7] ॥ १२१ ॥
त्रि सप्तकृत्वो[8] गोमूत्रे ज्वालिनीभस्म[9]गालितम् ।
शोषयेत्तस्य वापेन तीक्ष्णं मूषागतं[10] द्रवेत् ॥ १२२ ॥
त्रि सप्तकृत्वो[11] निचुलभस्मना भावितेन तु[12] ।
केतक्यास्तु रसैस्तीक्ष्णम्[13] आवापाद्द्रवतां व्रजेत् ॥ १२३ ॥
पक्वधात्रीफलरसे शङ्खे[14] सप्ताहभावितम् ।

---

(1) K reads वापि (2) M reads भूयन which is gram inc (3) च खलि च सत्वानि an incomplete variant in B K reads सत नि अखिलानि च सत्वानि an incorrect variant in M (4) B has an incomplete charana—द्रावयेत् प्रयत्न K has द्रावयत्तत्प्रयत्न (5) M reads सुद राय यद्रज which is incorrect (6) K reads गोपजै M reads हयलालसगोपकै which is unintelligible (7) B has an incomplete charana—सुचिर ति द्रत (8) B reads त्रि सप्तकृत्वा K and M read त्रिसप्तकृत्वो Both are gram inc (9) K reads ज्वालिनि M reads ज्वालनीपत्र (10) K has मूखागत which is inc [Vide p 39 note (11)] (11) All the MSS read त्रिसप्तकृत्वा which is grammatically erroneous (12) K reads विन्दवेन तु (13) B reads रसस्तीक्ष्णम् K reads केतक्या सुरसैस्तीक्ष्णा Both are gram inc (14) B reads सङ्खे

पुन कञ्चुकितोयेन[1] भावित सप्त[2]वासरम् ॥ १२४ ॥
शरावयुगलान्त स्थ[3] सुदृढ परिधामितम्[4] ।
तत्तीक्ष्णचूर्ण[5] देवशि रसरूप प्रजायते ॥ १२५ ॥
तालक गन्धपापाण[6] शिलामाक्षिकगैरिकाम् ।
कासीस खण्डसौराष्ट्री[7] तुल्यमभ्रकमेव च ॥ १२६ ॥
ग्वसृगालतरचूर्णा[8] कुक्कुटस्य मल[9] तथा ।
मयूरग्टध्रमार्जार विष्ठा च समभागकम्[10] ॥ १२७ ॥
भावयेच्चि[11] स्नुहीचोरै[12]देवदाल्यो[13]रसेन च ।
तत्कल्क[14]मष्टमाशेन लोहपत्राणि[15] लेपयेत् ॥ १२८ ॥
धर्मे द्रुत भवल्लोहमितेरव निषिचयेत्[16] ।

(1) K reads कचुकी M reads पाम in place of पुन which is inc (2) M reads भावितसप्त (3) शरावयुगलस्थ च a variant in B शराव युगलस्थ च a variant in K Both the readings seem to be incorrect. (4) B reads erroneously—परिधावापित. M reads परिधामित (5) K has ताम्रचूर्णानि which is not gram correct (6) B and K read गन्धपाशाण which is not correct, as the term is in masculine gender M reads तालभ्रकपाषाण which is not accurate (7) M has कासीस खण्डसौर ट (8) M reads श्वसमान्सरीढ़ाणी (9) B and K have मलतथा (10) B and K read समभागिकम् (11) B reads भावयेत्त्रि. K reads भावत्रि M reads भावयेत् The first two readings are incorrect and the last is incomplete (12) M reads स्नुहिचौरै (13) M reads देवदाल्यो (14) M has तत्कल्क which seems to be inc. (15) B and M read लोहपत्राणि (16) एवं रेतश्विषचयत् an incorrect variant in K.

अङ्कोलस्य तु मूलानि काञ्जिकेन प्रपेषयेत् ।[1]
लोहलेपं ततो दद्याद् अग्निस्थं धारयेत्[2] प्रिये ॥ १२८ ॥
पुनर्लेपं ततो दद्यात् परिच्छिन्ना[3]रसेन तु ।
मत्स्यपित्तेन[4] देवेशि वह्निस्थं धारयेत् प्रिये ॥ १३० ॥
पुनर्लेप प्रकुर्व्वीत लाङ्गलीकन्दसम्भवम् ।
त्रिभिर्लेपैर्द्रुत[5] लोहं निर्म्मल स्वच्छवारिवत्[6] ॥ १३१ ॥
चूर्णित देवि कूर्म्मास्थि मेषशृङ्गं शिलाजतु[7] ।
कुरुते प्रतिवापेन बलवज्जलवत् स्थिरम्[8] ॥ १३२ ॥
अर्कापामार्गमुसलो[9] निचुलं चित्रकं तथा ।
कदलो पोतकी दालो[10] चारमेषां तु साधयेत् ॥ १३३ ॥
गालयेन्माहिषे मूत्रे षड्वारान्[11] सुरवन्दिते ।
आवापाद्द्रावयेदेतदभ्रसत्त्वादिज[12] रज ॥ १३४ ॥
दन्तीदन्तो[13] विशेषेण द्रावयेत् सलिलं यथा ॥ १३५ ॥

---

(1) This hemistich is wanting in K.
(2) M reads धामयेत्
(3) B reads परिच्छिन्न
(4) B and M have मत्स्यपित्तञ्च
(5) M reads त्रिभिर्लेपे द्रुत, which is not gram correct
(6) B reads स्वच्छ वारिवत् which is an error of the scribe
(7) K has शिलाजितु, which seems to be erroneous
(8) B reads काचीव जलवत् स्थिरम् M reads कांस्यपात्रे स्थर्वास्थितम्
(9) M reads कदली, which is incorrect, as the very same word is mentioned afterwards
(10) M reads कदल्यपोतकी माली
(11) M reads चत्वार, which seems to be gram. inc
(12) K has अभ्रमत्वादिक M has अभ्रमत्व'त
(13) K has दन्तींदन्त (without विसर्ग) M has दन्तादन्ती

रसेनोत्तरवारुण्या[1] सुतं वैक्रान्तजं रज:[2] ।
प्रतिवापेन[3] लोहानि द्रावयेत् सलिलोपमम् ॥ १३६ ॥
॥ इति लोहद्रावविधिः ॥

रत्नानां द्रावणं वक्ष्ये गगनस्य द्रुतिं तथा ॥ १३७ ॥
त्रिफला च[4] त्रिकटुकं त्रिक्षारं कटुपञ्चकम्[5] ।
बला चातिबला चैव तृतीया च महाबला[6] ॥ १३८ ॥
अश्वगन्धा च वो नारी[7] भूलता मातृवाहक. ।
गोपेन्द्रमण्डली चैव षड्बिन्दुर्द्विमुखी[8] तथा ॥ १३९ ॥
धीरा सूरणकन्दश्च[9] कञ्चुकी च पुनर्नवा[10] ।
सुद्धर्कोन्मत्तहलिनी पाठा चोत्तरवारुणी ॥ १४० ॥
अयस्कान्तो गोक्षुरश्च[11] मृदुदूर्वाम्लवेतसम्[12] ।
शिलाजतु च[13] सौवीरं विषगन्धकटङ्कणम्[14] ॥ १४१ ॥

---

(1) रसेनोत्तमवारुण्या a variant in M (2) B reads रज, wh is evidently an error of the scribe (3) M reads प्रतिवापेन, whi is unintelligible (4) K and M read तु (5) M has पुष्पपञ्चक (6) B reads महाबला (7) B reads च द्वीनारी (8) K read षडबिन्दुर्बहुमुखी (9) M reads कन्दश्च (10) B has कञ्चुकी मपु नवा (11) B has an incomplete charana—अयस्कान्तगुरश्च. (12) I reads मृगदूर्वाम्लवेतसम् K reads मृदुदूर्वाम्लवतसम् M reads मृगधूर्वाम्लवेतसम् We have adopted the above reading after collating all the texts [मृदुदूर्वा perhaps = मौम्यदूर्वा as मृदुत्पल = नीलोत्पल ] (13) B has शिलाधातु च K has शिलाधातु च M has शिलाजतुश्च All the readings are gram inc. (14) विष गन्धकटङ्कण, a variant in B विषगन्धकटङ्कणे, a variant in K

पृथग्दशपलं[1] सर्व्वं सूक्ष्मचूर्णं तु कारयेत् ।
कुम्भद्वय कुलत्थाना क्वाथेन तिनिशस्य च[2] ॥ १४२ ॥
क्वाथयेन्मृदुतापेन यावत् कुम्भावशेषितम् ।
तेन क्वाथेन तच्चूर्णं भावयेदेकविंशतिम्[3] ॥ १४३ ॥
रत्नानि तेन लिप्तानि तत्क्वाथस्थं धमेत्[4] पुनः ।
अहोरात्रेण तान्याशु द्रवन्ति सलिलं यथा ॥ १४४ ॥

॥ इति रत्नद्रावविधिः ॥[5]

अभ्रकादीनि लोहानि द्रवन्ति ह्यविचारतः ।
निर्मलानि च[6] जायन्ते हरवीजोपमानि च[7] ॥ १४५ ॥
मिलन्ति च रसेनाशु वह्निस्थान्यक्षयाणि च[8] ।
तैर्द्रुतैः स्पर्शमात्रेण[9] क्षणाद्बध्येत सूतकः[10] ॥ १४६ ॥
लोहाना मारण[11] वक्ष्ये समाहितमना[12] शृणु ।

---

(1) B reads दशफल, which is incorrect (2) B has तिमिरस्य च K has तिमरस्य च M has क्वाथेन तिमिशस्य च We have adopted the above reading after collating all the texts. (3) B and M read एकविशति K reads एकविशति. All the readings are inc. (4) तत् क्वाथे तडमेत्, a reading in M, which has no sense (5) This portion is not found in B and M (6) B and M read निर्लेपानि च (7) K has हरवीजोपयोनि च, which has no clear sense (8) K reads वह्निस्थान्यचिषाणि च, which seems to be inc. (9) तैर्ते सर्षप मात्रेण, an incorrect variant in K (10) B reads क्षणादनुध्येत K reads क्षणादवेध्येत M reads क्षणादवध्येत सूतकम् (11) B has मारणे, which is gram inc. (12) K has समाहितमना (without विसर्ग), which is gram inc.

सुह्री[1]चीरेण सिन्दूर[2] कनकं रजत पुन[3] ॥ १४७ ॥
तेनैव[4] माचिकं ताम्रमजाचीरेण गन्धक.[5] ।
स्तन्यन हिङ्गुल[6] तीच्ण वङ्ग तालपलाशकम् ॥ १४८ ॥
नाग शिलार्कचीरेण स्वच्छपचीकृत[7] प्रिये ।
मारयेत् पुटपाकेन[8] निरुत्थ[9] भस्म जायते ॥ १४९ ॥
न सोऽस्ति[10] लोहमातङ्गो य न गन्धककेसरी ।
निहन्याद्गन्धमात्रेण[11] यद्वा माचिककेसरो ॥ १५० ॥
रसीभवन्ति[12] लोहानि मृतानि सुरवन्दिते ।
हरन्ति रोगान् सकलान्[13] रसयुक्तानि[14] किं पुनः[15] ।
मीलनाद्राशयन्त्यव[16] वलीपलितरुग्जरा[17] ॥ १५१ ॥

---

(1) B and M read स्नुह K reads सुहा, which seems to be inc (2) K has सिन्दूर which is erroneous M has सन्नाह (3) K reads तु वा (4) B has मनैव which is evidently an error (5) B and M read गन्धकम् (6) M has an incorrect reading—हिङ्ग (7) B reads स्वच्छ पचीकृत M reads स्वच्छपचन्तु त (8) B and M read पुटयोगेन (9) B has निरुत्त्व M has निरुड Both of these readings appear to be inc. (10) B and M read रस ति, whereas the sense is not clear (11) निहन्याकथमात्रण a variant in B, which seems to be inc (12) B has रसमवन्ति K has रसीभवती M has रस भवन्ति We have adopted the above reading after collating all the texts (13) M reads सकलान् रोगान् (14) B reads समयुक्तानि (15) K reads वै पुन (16) B has मीलनाद्रांशयत्यव M reads मिलान नाशयन्त्य व None of these texts is correct (17) K reads रुगञ्जरान् M reads रुक्परान्

वज्र[1]मात्तिकतीक्ष्णाभ्रं शस्यते देहकर्म्मणि[2] ।
नाग वङ्ग सुवीरञ्च[3] द्रव्यकर्म्मणि योजयेत् ॥ १५२ ॥
परिवालन्तु[4] यल्लोहं तथाच मलयोद्भवम् ।
एतल्लोहद्वय देवि विशेषाद्देहरक्षणम् ॥ १५३ ॥
रागं[5] महारसादीना ज्ञात्वा वीजानि साधयेत् ।
तन्ममाचक्ष्व देवेशि[6] किमन्यच्छ्रोतुमर्हसि ॥ १५४ ॥

इति श्रीपार्व्वतीपरमेश्वरसंवादे[7]
रसार्णवे रससंहितायां
महारसोपरसलोहलक्षणसंस्कार[8]-
रत्नद्रावणमारणनिर्णयो नाम[9]
सप्तमः पटलः ॥७॥

---

(1) B reads वज्र (2) M reads मेहकर्म्मणि, which appears to be incorrect (3) वङ्गनागसुवीरञ्च, a variant in M (4) B has पडिवालन्तु K has विटीवाल (5) K reads नाग, which is incorrect, because the next Patala opens with the description of रागसंख्या (6) तन्ममाचक्षि देवेशि, a variant in B This charana is wanting in M (7) This portion is wanting in B and M (8) K reads रत्न between महारसोपरस and लोह The word महा is not found in M, it reads रसोपरससंस्कारलोहलक्षणमारणनिर्णयो नाम (9) K reads only निर्णयो नाम, omitting रत्नद्रावणमारण

# अष्टमः पटलः ॥



श्रीदेव्युवाच ।[1]

महारसानां लोहानां रत्नानाञ्च सुरेश्वर[2] ।
रागसङ्ख्या[3] तथा वीजसाधनञ्च[4] वद प्रभो ॥ १ ॥

श्रीभैरव उवाच ।

महारसेषु द्विगुण[5]स्ताम्रराग:[6] सुरेश्वरि ।
गिरिदोषे चय नीते[7] सूतक रञ्जयन्ति ते[8] ॥ २ ॥
सस्यकश्चपलश्चैव राजावर्त्तश्च माक्षिक:[9] ।
विमलो[10] गैरिकश्चैव[11]मेकैकं द्विगुणं भवेत् ॥ ३ ॥
भ्रामकादिषु कान्तष्वप्येकद्वित्रिगुणो[12] हि सः ।
एकैकमभ्रके चैव[13] खतपोतारुण:[14] सिते ॥ ४ ॥

---

(1) K reads देव्युवाच This is wanting in M. (2) M has रत्नानां च सुरेश्वरि, which is erroneous. (3) B has not this word. K has रागसख्या M has रागसङ्गा. (4) M reads here सारणञ्च, but it reads साधनञ्च in its colophon. (5) B reads त्रिगुणा (6) M reads ताम्रे राग (7) गिरिदोषचयकर, a variant in M (8) स्वार्णे रञ्जयन्ति ते, a variant in M (9) M reads राजावर्त्तश्च माक्षिकम्, which is incorrect (10) K and M read विमला (11) K has गैरिकश्चैव, M has गैरिकश्चैव. (12) K reads कान्तेषु चाप्येवं द्विगुणा. (13) एकैकमभ्रकश्चैव, a variant in K. (14) खतपीतारुणा, an incorrect reading in M

अष्टादशसहस्राणि स्थिता रागाश्च[1] गन्धके ।
अयुत दरदे देवि[2] शिलाया द्विसहस्रकम्[3] ॥ ५ ॥
रसके[4] सप्तसाहस्र काङ्कुष्ठे तु[5] चतुष्टयम् ।
रसगर्भे प्रकाशन्ते जारणे तु[6] भवेद्यदि ॥ ६ ॥
द्वादशाग्र शत[7] पञ्च नागे रागा[8] व्यवस्थिता[9] ।
शतहीन सहस्र तु वङ्गे रागा[10] व्यवस्थिता ॥ ७ ॥
रागाणा शतपञ्चाशत् शुल्बमध्ये व्यवस्थिता ।
रक्तपीताश्च शुक्लाश्च[11] हेम्नि रागाश्च षोडश ॥ ८ ॥
रागा षष्टि[12]सहस्राणि शक्रनीले व्यवस्थिताः ।
महानीले च[13] देवेशि ते रागा द्विगुणा[14] स्थिता. ॥ ९ ॥
माणिक्ये तु सुरेशानि रागा[15] लक्षत्रयोदश ।
गजवारिसमुत्पन्न रत्न[16] मुक्ताफल विदु ॥ १० ॥

---

(1) M reads भागाश्च, which seems to be incorrect (2) अयुतं दरद वेश a reading in M wh ch appears to be inc (3) M reads शिलाय च द्विसहस्रकम् (4) K reads रसके (5) M reads कङ्कुष्ठेव, wh ch seems to be inc (6) M has जारणान्तु, wh ch is gram inc (7) द्वादश सशत a variant in M wh ch is inc (8) M reads नागो राग wh ch is g am inc (9) K reads व्यवस्थिता which is an error of the scribe (10) M reads वङ्ग राग which is not correct (11) K has शुल्बाश्च M reads रक्तपीता च शुक्ला च (12) K reads षष्टी M reads erroneously रागाय छ (13) M has महानीलश्च wh h is gram inc. (14) M reads द्विगुणं which is not grammatically correct. (15) K reads राग which is not gram correct (16) M reads रक्त which is inc

गजे[1] त्रीणि सहस्राणि षट्सहस्राणि वाजिनि[2] ।
नवलक्ष च रागाणां पद्मरागे व्यवस्थिता. ॥ ११ ॥
भिदयेत् सर्व्वलोहानि यत्र[3] केन न भिद्यते[4] ।
तद्वज्रं तस्य देवेशि राग लक्षद्वयं[5] विदुः ॥ १२ ॥
षोडशैव सहस्राणि पुष्परागे व्यवस्थिता. ।
पादानलक्षरागास्तु[6] प्रोक्ता मरकते[7] प्रिये ॥ १३ ॥
रागसंख्या न जानाति[8] सक्रान्तस्य[9] रसस्य तु ।
अधिकं मारयेल्लोहं हीनं चैव प्रकाशयेत्[10] ॥ १४ ॥
मानवेन्द्र.[11] प्रकुर्व्वीत यो हि जानाति पार्व्वति ।
शतकोटिप्रमाणेन[12] रागसंख्या प्रकल्पयेत् ।
खगनं चैवमालोक्य[13] शतकोटिस्तु विध्यति[14] ॥ १५ ॥
अत. परं प्रवक्ष्यामि बीजाना साधनं प्रिये ।
हेमतारवशाद्बीजं[15] द्विविधं तावदीश्वरि ॥ १६ ॥

(1) गज is the reading in M which is incorrect [गजे = गजेन्द्रे]
(2) M reads वाजित, which is not correct (3) K and M read यत्र
(4) M reads यत्र केनापि भिद्यते, which conveys the reverse sense
(5) M has लक्षत्रय (6) K has पादाक्ष M has पादैन लक्ष रागास्तु which has no clear sense (7) प्रोक्त मरतके, an incorrect reading in M. (8) K reads जानन्ति which is not accurate (9) M reads साकान्तस्य which has no clear sense (10) M has प्रकारयेत् (11) मारयेत् is the reading in M (12) शतकोटीप्रमाणेन, a variant in K (13) चैवमालोक, a reading in M (14) K reads विध्यति M reads विद्यते. We have adopted the above text, after collating the MSS (15) K reads वशाद्बीज, which is a palpable error

पीतारुणे[1]र्हेमबीजं[2] तारबीजं सितैर्भवेत् ।
कल्पितं रञ्जितं पक्वमिति भूयस्त्रिधा भवेत् ॥ १७ ॥
कल्पितं द्विविधं तच्च[3] शुद्धमिश्रविभेदतः ॥ १८ ॥
रसोपरसलोहानां[4] बीजानां कल्पनं पृथक्[5] ।
शुद्धं मिश्रं तु[6] संयोगात्[7] यथालाभं[8] सुरेश्वरि ॥ १९ ॥
सत्त्वमावर्त्तितं व्योम्नि शोधितं काचटङ्कणैः ।
चिञ्चाफलाम्लनिर्गुण्डी[9]-पत्रकाल्कनिषेचनैः[10] ।
पक्वं निबिड़ितं देवि[11] रसपिष्टिसमं भवेत् ॥ २० ॥
स्नेहक्षाराम्लवर्गैश्च[12] शिलायाश्च पुटत्रयात्[13] ।
मृताहि धूपनायन्त्रे[14] धूपगन्धानुलेपनात् ।
वङ्गस्यापि[15] विधानेन तालकस्य हतस्य[16] वा ॥ २१ ॥
ताप्यहिङ्गुलयोर्वापि हते च[17] रसकस्य वा ।

---

(1) M has पीतारुणी (2) K has हेमबीजै, which is gram inc (3) K reads तच्च (4) रसोपरसलानि, a variant in K (5) बीजानाच पृथक्स्थिते, a variant in M (6) M has शुद्धमिश्रश्च [रञ्जित is described in the 41st sloka, and पक्व in the 50th ] (7) K reads योगाय (8) पान्लभग is the absurd reading in K (9) K reads फलाम्लसेहुण्ड (10) K reads निशेचनै M reads पत्रिकल्क Both are inc (11) K has पक्वनिबिड सद्देवि. (12) M has स्नेह-क्षाराम्लवर्गे (13) M reads शिलया च पुटत्रयात् K reads पुटत्रय. (14) धूपनायन्त्रे is wanting in K. (15) K reads वङ्गस्यापि, which seems to be inc (16) K has हतेन M has तालकन (17) M reads वातिनो which is unintelligible

रसगर्भे द्रवेत् क्षणं[1] पत्रं कनकतारयोः ॥ २२ ॥
सङ्कराख्यन्तु[2] दुर्मेल्य प्रिये मृदुखराह्वयम्[3] ।
ततः सम्मर्दितं[4] देवि द्वन्द्वमेलापनं द्रुतम्[5] ।
भवेत् समरसं गर्भे[6] रसराजस्य च द्रवेत्[7] ॥ २३ ॥
अतः परं[8] प्रवक्ष्यामि द्वन्द्वमेलापनं शृणु ॥ २४ ॥
वर्षाभूकदलीकन्द काकमाचीपुनर्नवाः ।
स्वर्णं नरकपालं च[9] गुञ्जाटङ्कणसंयुतम्[10] ।
घोरतैलेन सुध्मातं हेमाभ्रं मिलति प्रिये ॥ २५ ॥[11]
अनेनैव विधानेन ताराभ्रमपि मेलयेत्[12] ॥ २६ ॥
वङ्गमावर्त्य[13] देवेशि पुनः सूतकयोजितम्[14] ।
कदलीकन्दतोयेन मर्दयेट्टङ्कणान्वितम् ।
अन्धमूषागतं[15] ध्मात वङ्गाभ्र[16] मिलति क्षणात् ॥ २७
चूर्णं नरकपालस्य स्त्रोस्तन्य घनशिग्रुकम् ।

---

(1) K reads क्षणात् M reads भवेत् क्षण (2) K reads सगर ग (3) K has an incomplete charaṇa—दुखराह्वयो M reads र ह्वयम् (4) K reads सम्मिश्रित. (5) K reads तत (6) स्वरससमर्गी, a variant in K, which is partially incorrect M reads व which is senseless (7) K reads ध्वेद्वम् (8) K reads कत (9) M reads तु (10) M has सम्मितम् (11) This hemist is not found in K (12) तारकाभ्र विमिलयत्, a variant in . (13) K reads भग, which is incorrect M reads erroneously वङ्गमाव (14) K has योगत (15) K reads अभमूषागत M reads अध्मूष गत Both are inc. (16) M reads वङ्गाभ

गुञ्जाटङ्कणसंयुक्तं वङ्गाभ्रं[1] मिलति क्षणात् ॥ २८ ॥
अभ्रकं चूर्णयित्वा तु काकमाचो[2]रसद्रुतम्।
कपित्थतोयसंसृष्टं[3] रस[4]टङ्कणसंयुतम्।
वङ्गपत्रान्तर[5]न्यस्तं ध्मातं वङ्गाभ्रकं[6] मिलेत् ॥ २९ ॥
आवर्त्त्य कटुतैलेन भस्मापामार्गजं क्षिपेत्।
वङ्गाभ्र[7] हरितालञ्च[8] नागाभ्रे तु[9] मनःशिलाः ॥ ३० ॥
हेमाभ्रं नागताप्येन[10] ताराभ्रं वङ्गतालकात्।
गन्धकेन तु शुल्वाभ्रं[11] तीक्ष्णाभ्रं सिन्धु[12]हिङ्गुलात्।
वङ्गाभ्र[13] हरितालेन नागाभ्रं शिलया मिलेत् ॥ ३१ ॥
लाङ्गली च नरोकेश[14] कार्पासास्थिकुलत्थकम्।
भूलता चाश्मदलनो[15] स्नोस्तन्यं सुरगोपकः[16] ॥ ३२ ॥
एतल्लिप्तमूषाया[17] सुध्मातास्तीव्रवह्निना[18]।

---

(1) M reads वङ्गाभ्र (2) K reads काकमाचि (3) M reads असृष्ट (4) M reads सूत (5) K reads वङ्गपत्रान्तरे, [which is = वङ्गपत्रान्तरे] M reads वङ्ग. (6) M reads वङ्गाभ्रक. (7) K reads वङ्गाभ्र M reads वङ्गाभ्र (8) K reads erroneously हरितालञ्च. (9) K has नागाभ्र तु M has नागाभ्रेण, which is inc [नागाभ्रेण is correct] (10) K reads नागतापेन. (11) M reads शुल्वाभ्र, which is gram inc. (12) K has सिन्धु. (13) M has वङ्गाभ्र (14) M reads नरोकेश, which is inc. (15) K reads कटुतुम्बा च. (16) K and M read गोपकम्, which is incorrect, the term being used in the masculine gender (17) एतल्लिप्य मूषायां, a variant in K, which seems to be inc (18) सुध्मात तीव्रवह्निना, a variant in K, wherein the first term is gram inc.

कान्ताभ्रशैलविमला मिलन्ति सकलान्[1] क्षणात् ॥ ३३

लताकुकुन्दरीमास[2] विषटङ्कणयोजितम् ।
मूषालेपेन[3] कुरुते सर्व्वद्वन्द्वेषु[4] मेलनम् ॥ ३४ ॥

अभ्रक सुरसा शृङ्ग[5] मण्डूकस्य वसा विषम् ।
गुञ्जाटङ्कणयोगेन[6] सर्व्वसत्त्वेषु[7] मेलनम् ॥ ३५ ॥

टङ्कणोर्णागिरिजतु कर्णाख्यामलककर्कटैः[8] ।
मिलन्ति सर्व्वद्वन्द्वानि स्त्रीस्तन्यपरिपेषितैः ॥ ३६ ॥

धातकीगुग्गुलुगुड[9]-सजयावकटङ्कणैः[10] ।
स्त्रीस्तन्यपेषितैः सर्व्व[11] द्वन्द्वजं तु रसायने ॥ ३७ ॥

खसत्त्व सूक्ष्मचूर्णं तु[12] पूर्व्वकल्केन संयुतम् ।
अन्धमूषागत[13] ध्मात सङ्कर मिलति क्षणात् ॥ ३८ ॥

वापित[14] ताप्यरसक[15] सस्यकैदरदेन च ।
खसत्त्व स्याद्विबद्ध च[16] दृढ ध्मात मिलेत्ततः ॥ ३९ ॥

रसोपरसलोहानि सर्व्वाण्येकत्र धामयेत् ।

---

(1) K reads सकल (2) M reads कुकुन्दरीमांस (3) मूषालेपनं, an incorrect reading in K (4) M reads सव द्वन्द्व (5) ...र्थ खुरशृङ्गक, a variant in M (6) M reads लुपेन (7) M reads सव सत्त्वे (8) कर्णाक्षीमौनककर्कटौ a variant in K (9) धनु गुग्गुलुगुड a variant in K (10) सजायवकटङ्कणे a variant in M (11) M reads सत्तो (12) सूक्ष्मचूर्णेन यत्किञ्चित् a variant in K (13) K reads अन्धमूषागत, which is inc. (14) M reads पावित, which is not technical (15) K reads ताप्यरसक (16) खसत्त्व स्याद्विबन्धञ्च a variant in M.

अन्योन्यं द्वन्द्वता यान्ति[1] द्रवन्ति[2] सलिलं यथा ॥ ४० ॥
बीजानि कल्पितान्येव[3] रञ्जितानि पर[4] शृणु ॥ ४१ ॥
घनं[5] माक्षिकचूर्णेन शुल्वचूर्णेन रञ्जितम् ।
द्वन्द्वितं ताप्यसत्त्वेन[6] रसराजस्य रञ्जनम् ॥ ४२ ॥
आरक्तवल्लीगोमूत्रै[7] बहुधा परिभाविते[8] ।
कुनटीगन्धपाषाणे[9]र्हेममाक्षिकहिङ्गुले[10] ॥ ४३ ॥
वापितं सेवितं रक्त[11]गणैः स्नेहैर्मृतं[12] ततः ।
रञ्जनं रसराजस्य तीक्ष्णताम्रौ[13] विशेषतः ॥ ४४ ॥
केवल विमलं ताम्रं वापितं[14] दरदेन च[15] ।
कुरुते त्रिगुणं जीर्णं लाक्षारसनिभं रसम्[16] ॥ ४५ ॥
रसकं द्विगुणं[17] दत्त्वा ताम्रं सुध्मातमीश्वरि ।
कृष्णाभ्रकस्य चूर्णं च रक्तवर्गैर्सुहु[18] पुटैः ॥ ४६ ॥

---

(1) अन्योन्यद्वन्द्वतामेति a variant in M. (2) M reads द्रवती, which is gram incorrect (3) M has कल्पितान्येव (4) M reads वर, which is not correct. (5) M reads वन, which has no clear sense. (6) द्वन्द्वज्ञ ताप्यसत्वेन, a reading in K, which seems to be erroneous. (7) आरक्तवल्लीभिर्मूत्रै, a variant in K. आरक्तवर्गगलित, a variant in M (8) गोमूत्र बहुभाविते, a variant in M (9) M reads पाषाण (10) M reads हिङ्गुलम् (11) M reads रक्त (12) M reads नवस्नेहमृत (13) M reads तीक्ष्णताम्र (14) K reads वापीत which is inc (15) M reads वा (16) K reads रस, which is grammatically inc (17) द्विगुण रसक, a reading in K. (18) M reads रक्तवर्ग मुहु

ताप्येन वा मृत हेम त्रिगुणेन निवापितम्[1] ।
भाण्डिकाया[2] तु रसक ताप्य[3]सैन्धवसयुतम् ॥ ४७ ॥
इन्द्रगोपनिभ यावत् सर्व्वं द्विगुणजारणात् ।
द्रुत[4] हेमनिभ सूत कुरुते नात्र सशय ॥ ४८ ॥
अभ्रक हेम ताम्र च शिलया[5] माक्षिकेण च ।
गैरिकेण च मुख्येन रसकेन च रञ्जयेत् ॥ ४९ ॥
बीजानि रञ्जितान्यत्र[6] पक्वबीजान्यत[7] शृणु ॥ ५० ॥
महारसानुपरसान्[8] तीक्ष्णलोहानि च चर्येत्[9] ।
समाश सममाक्षीक गन्धकावापयोगत ॥ ५१ ॥
शतशो वापयेदेतत्[10] चर्चीत्र सावशेषितम्[11] ।
समाश रसराजस्य गते द्रवति निश्चितम्[12] ॥ ५२ ॥
तदेतद्विष्टिकास्तम्भे जारणाया सुरेश्वरि ।
रञ्जने रसराजस्य सारणाया च शस्यते ॥ ५३ ॥
तदेव[13] शतशो रक्तगणे, स्नेहनिषेचितम्[14] ।

---

(1) M reads विपाचितम् (2) इण्डिकायां a reading in K. (3) K reads रसकत प्य M reads रसकान्तमप्य which is unintelligible. (4) M reads मृत. (5) M reads शिलायां (6) बीजानां रञ्जनं अत्र, a variant in M (7) M reads पक्वबीजमत. (8) M has महारसानुपरसा (9) K reads चयत which is grammatic M reads कीक्ष्णलोहानि which is unintelligible. (10) शतशो वा भवेदतत् a variant in M (11) K has an incomplete charana—चर्चा सावशेषित. (12) This charana and the next three charanas are not found in K. (13) M reads तदेव (14) K has निषेचित M has रक्तगणस्नेहनिषेचितम्

अधिकं[1] शस्यते तेषु सहस्रांशेन वेधकृत्[2] ॥ ५४ ॥
निर्व्यूढं नागवङ्गाभ्यां क्रियाया हेमतारयोः ।
खसत्त्व रविणा योज्य द्वन्द्वित स्याद्रसायने ॥ ५५ ॥
सस्नेहचारपञ्चाम्लैः[3] रसैस्तैस्तालकादिभिः[4] ।
समद्वित्रिगुणान् ताम्रे[5] वाहयेद्वङ्गपन्नगान् ॥ ५६ ॥
रक्तस्नेहनिषिक्तं तद्रसाकृष्टिरिति[6] स्मृतम् ॥ ५७ ॥
माक्षिकं गन्धपाषाणं हरितालं मनःशिलाम्[7] ।
वैक्रान्तकं कान्तमुख्यं[8] सस्यकं विमलाञ्जनम् ।
रसकं धापितं शश्वत्[9] चूर्णितं हेम्नि वाहयेत् ॥ ५८ ॥
लोहपर्पटिकाताप्य[10]-कङ्कुष्ठविमलाभ्रकैः ।
मृतशुल्व[11]शिलासूत सुह्यर्कक्षीरहिङ्गुलैः ।
नागो निर्जीवता[12] याति पुटयोगे पुनः पुनः ॥ ५९ ॥
रसतालकशङ्खाभ्र[13]-चिञ्चाक्षारैस्तथा त्रपुः[14] ।
मृतं नागं मृतं वङ्गं शुल्वं तीक्ष्णञ्च वा मृतम् ।

---

(1) K reads अधक  (2) M reads वेधयेत्  (3) सस्नेहक्षारक-क्षाम्लैः, a variant in K  (4) अरिभिस्तालकादिभि, a variant in M.  (5) समद्वित्रिगुणास्ताम्रे, a variant in M, which seems to be gram incorrect  (6) M reads तद्रसाभिरिति च,  (7) M reads erroneously मनश्शिला  (8) M has काकमुख  (9) K reads वापि शतश-  (10) K reads लोहपर्पटिका ताप्य  (11) M reads शिल्प  (12) K reads नाम्यं निर्जीवतां, which is inc  (13) रसतालकशङ्खाभ्र, a variant in K.  (14) K reads त्रपु

एकैकमुत्तमे हेम्नि[1] वाहयेत सुरवन्दिते[2] ॥ ६० ॥
निरुत्थ[3] पन्नगे हेम्नि निर्व्यूढ[4] शतसद्गुणे[5] ।
गोरोचनानिभ धाम[6] भास्करे तारसन्निभम्[7] ॥ ६१ ॥
तीक्ष्णाभ्रक रविसम[8] माक्षिक द्विगुण तथा[9] ।
आवर्तित चूर्णित च मारित[10] सप्तभि पुटै ॥ ६२ ॥
व्यूढे शतगुणे[11] हेम्नि तद्बीज जारयेत् समम् ।
चन्द्रार्क[12]पत्रलेपेन शतभागेन वेधयेत् ॥ ६३ ॥
ऊर्ध्वाधो माक्षिक दत्त्वा शुल्व हेमसम भवेत्[13] ।
एव दशगुण व्यूढ बीज कारणसन्निभम्[14] । ६४ ॥
रसकाभ्र कान्तताम्र[15] भागवृद्ध्या धमेत्तत[16] ।
माक्षिकेण हत तच्च बीजे[17] निर्वाहयेत् प्रिये ॥ ६५ ॥
द्वात्रिंशद्गुणित[18] हेम्नि नाग ताप्य हत[19] वहेत् ।

---

(1) एकैकमुत्तमेऽहमि a variant in M (2) M reads सुरसुन्दरि (3) K reads निरुत्थ (4) K reads निव्यूढ which appears to be inc (5) शतसद्गुण is the reading M which is unintelligible (6) K reads द्युम M reads गोरोचनानिभ (7) K has त्वारसन्निभ [तु + आरसन्निभ]. (8) तीक्ष्णाभ्रकरव द्युम a variation in K M reads तीक्ष्णाभ्रके (9) M reads यथ (10) M reads मारित which is grammatic. (11) M has व्यूढ शतगुणं (12) M reads चन्द्रार्क which is inc (13) M reads समम् (14) M reads कारणसन्निभम् (15) रसकाभ्रकताम्र a variant in M (16) M reads समम् तत (17) K reads बिजे which is an error of the scribe (18) द्वात्रिंशद्गुण a reading in K (19) M reads रस

त्रिंशद्गुणशिलावाह्य[1] नागबीजमुदाहृतम् ॥ ६६ ॥
ताप्यतालकवापेन[2] सत्त्वं पीताभ्रकस्य तु ।
बीजे निर्वाहयेदेतत् यीषामृष्टस्य[3] वेधकम् ॥ ६७ ॥
नागः करोति मृदुतां निर्व्यूढस्तां च रक्तताम् ।
खादति[4] पीततां तीक्ष्णं कान्तस्थां कालिकां विना ॥६८॥[5]
हेमबीजमिति प्रोक्तं—तारबीजमतः शृणु ॥ ६९ ॥
तीक्ष्णाभ्रताप्यविमल[6] रसकं समभागिकम्[7] ।
वङ्गभागास्तु चत्वारः[8] सर्व्वं ध्मातं विचूर्णितम् ॥ ७० ॥
पुटेन निहतं कार्य्य[9] व्यूढं तारन्तु वेधयेत् ।
द्वात्रिंशत्सद्गुणं[10] तारे वङ्गे[11] ताप्यं हृतं वहेत् ।
त्रिंशद्गुणात्तालवापात्[12] वङ्गबीजमुदाहृतम् ॥ ७१ ॥
कुटिलं[13] विमलं तीक्ष्णं खसत्त्वं चापि वाहयेत् ।
वङ्गाभ्रं ताप्यसत्त्वं वा[14] ताल[15]माक्षिकवापतः ।

---

(1) K reads वाया instead of वाह्य, which seems to be incorrect. (2) M reads वाचेन or पाचेन Both are gram inc. (3) K has घोषाकृष्टस्य. (4) K reads खादते, which is gram inc (5) This śloka is wanting in M. (6) K reads विमला. (7) K reads समभागीकम्, which is not gram correct (8) M reads erroneously वङ्गबीजमिति प्रोक्तं भागास्तु चत्वारः (9) M reads भाव्ये, which has no clear sense (10) K reads सगुणं (11) M reads वङ्ग (12) त्रिसद्गुणात्तकावापात्, a variant in M, which has no meaning. (13) K reads कुटील, which is inc (14) वङ्गाभ्रतालसत्त्व वा a variant in M, which appears to be inc (15) M reads त न.

शुक्लपुष्पगणे. सेकं स्नेहयुक्तैस्तु कारयेत् ॥ ७२ ॥
उक्तानि तारबीजानि—बीजाना रञ्जनं शृणु ॥ ७३ ॥
तीक्ष्णमाक्षिकशुल्बञ्च[1] नागेश्चपलमारितम्[2] ।
सिन्दूरसन्निभं यावत्[3] तेन बीजानि रञ्जयेत् ॥ ७४ ॥
निधाय खर्परे नागं ब्रह्मबीजदलै सह ।
दग्धमग्निमधो[4] दत्त्वा वह्निवर्ण यदा[5] भवेत् ॥ ७५ ॥
वासकेन विभीतेन[6] काक[7]किंशुकशिग्रुभिः ।
कोरण्डकस्य[8] पुष्पेण बकुलस्यार्ज्जुनस्य[9] च ॥ ७६ ॥
अहिमारेण[10] नागिन्या[11] कुमार्या नागकन्यया ।
शिम्बया[12] च त्रिगुणया क्वथितेनाजवारिणा[13] ॥ ७७ ॥
भावित खर्परस्थञ्च वापयित्वा[14] पुन. पुनः ।
सप्तभिर्दिवसैरेव मारित सुरवन्दिते[16] ॥ ७८ ॥
पुटयेद्गन्धकेनादा[16]वाम्लैश्च तदनन्तरम् ।

---

(1) K has तीक्ष्ण मार्क्षिकशुल्बञ्च. (2) नाग चपलमीरित a variant in K which has no clear sense. (3) K reads सन्निभं यावे M reads सिन्दूर (4) दग्धमग्निमधो, a variant in M (5) M reads यदा (6) वासकेन सहूनेन a variant in M (7) K reads शाक (8) M reads कोरण्टस्य च (9) M has बकुलस्यार्जुनस्य (10) K reads अहिमारेण, which seems to be inc. (11) M reads नागिन्या which is incorrect (12) K reads शिम्बया (13) K reads क्वथितेन (14) M reads वापयित्वा (15) M has सुरसुन्दरि. (16) पुटयेद्गन्धकेनाद a variant in M

द्रवं दलानां[1] बीजानां रसराजस्य रञ्जने ।
उद्घाटे कामणे[2] योज्यं पिष्टीस्तम्भे[3] विशेषतः ॥ ७९ ॥
मञ्जिष्ठाकिंशुक[4]रसे खदिरं रक्तचन्दनम् ।
करवीरं देवदारुं[5] सरलं रजनीद्वयम्[6] ॥ ८० ॥
अन्यानि रक्तपुष्पाणि पिष्ट्वा लाक्षारसेन तु ।
तैलं विपाचयेद्देवि[7] तेन बीजानि रञ्जयेत्[8] ॥ ८१ ॥
द्विगुणे रक्तपुष्पाणां[9] रक्तपीतगणस्य च[10] ।
क्वाथे चतुर्गुणे क्षीरे[11] तैलमेकं सुरेश्वरि ॥ ८२ ॥
ज्योतिष्मतीकरञ्जाख्य[12] कटुतुम्बीसमुद्भवम् ।
पाटलीपिप्पलीकाम काकतुण्डी[13]रसान्वितम् ॥ ८३ ॥
भेकशूकरमेषाहि[14] मत्स्यकूर्मजलौकसाम्[15] ।
वसया[16] चैकया युक्तं षोडशांशैः सुपेषितैः[17] ॥ ८४ ॥
भूलतामलमाचीक द्वन्द्वमेलापनौषधैः ।

---

(1) M reads उद्देद्रव्याणां, which is unintelligible (2) M reads कामदे, which is incorrect (3) M reads पिष्टस्तम्भे. (4) K reads किंसुक. (5) M reads दैवदारु (6) सरसी रञ्जनीद्वय, a variant in M. (7) M reads व्यापादयेत्तेन (8) कुर्याद्बीजादिरञ्जनम्, a variant in M (9) द्विगुण रक्तपुष्पाणि, a variant in K, which is not gram. correct. (10) M reads तु (11) K reads क्वाथ. M reads चतुर्गुण क्षीर (12) M reads करञ्जाच (13) M reads काकमुण्डी. (14) K reads माहिष instead of मेषाहि (15) मेर्षौ कर्म जलूकसाम्, an incorrect variant in M (16) M reads वयसा, which is gram. inc (17) M has षोडशांशे सुपेषितम्

पाचितं गालितं चैतत् सारणा[1]तैलमुच्यते ॥ ८५ ॥
रसतुल्यं यथा वीजं[2] गतं गर्भद्रुति[3] प्रिये ।
व्यापकत्वेन सर्व्वे[4] च समभागास्तथैष्यते ॥ ८६ ॥
पक्कं श्रेष्ठं समं गर्भे यद्द्रवेद्रञ्जयेच्च तम्[5] ॥ ८७ ॥
एवमुक्तानि वीजानि जारयेद्विड[6]योगत. ।
तन्ममाचक्ष्व देवेशि[7] किमन्यच्छ्रोतुमिच्छसि ॥ ८८ ॥

इति श्रीपार्व्वतीपरमेश्वरसंवादे[8]
रसार्णवे रससंहितायां
वीजसाधनो[9] नाम
अष्टम. पटल: ॥८॥

---

(1) M reads सारणं　(2) K reads यदा जीर्णं　(3) M reads गर्भद्रुति, which is incorrect　(4) व्यापकत्वेन सर्व्व, a variant in M which is not intelligible.　(5) यद्रवद्रञ्जयद्रसे, a variant in M, whereas the first term is inc.　(6) K reads जारयेद्वीज, which is incorrect　(7) This charana is not found in M　(8) This portion is not found in M　(9) K and M read वीजसाधनं, but as it qualifies पटल, which is in masculine gender, it ought to be also in the same gender The neuter gender may be supported by the rule of लिङ्ग विपर्यय But in order to keep up the uniformity we have adopted the masculine gender

## नवमः पटलः ।



देव्युवाच ।[1]

वीजाना कल्पन[2] प्रोक्तं विशेषेण च साधनम[3] ।
जायन्ते[4] तानि ये सूते[5] तान विडान् वक्तुमर्हसि ॥ १ ॥

भैरव उवाच ।[6]

काशोस[7] सैन्धव काङ्क्षी[8] सौवीरं व्योषगन्धकम ।
सौवर्चल सर्जिका च[9] मालतीनीरसम्भवम[10] ।
शिग्रुमूलरसे[11] सिक्तो विडोऽय सर्व्वजारण ॥ २ ॥
निर्दग्ध शङ्खचूर्णन्तु रविक्षीरशतप्लुतम ।
पुटित[12] बहुशो देवि प्रशस्तो जारणाविड[13] ॥ ३ ॥
शतशो वा प्लुत चूर्ण गन्धकस्य गवा जले ॥ ४ ॥
निर्दग्ध शङ्खचूर्ण तु[14] शिग्रुमूलाम्बुभावितम ।

---

(1) M reads श्रीदेवी (2) K reads प्रथमं. (3) K has विशेषरससाधन (4) K reads जायन्ते (5) M reads सूता which is gram incorrect (6) M has श्रीभैरव (7) M reads कासीस. (8) K reads माक्षी (9) K has व्यापका च wh ch creates a tauto logy (10) K reads मालतीरससम्भव We find also मालतीत रसम्भवम् in the med cal lex cons (11) K reads शिग्रुमुलरसे, which is inc (12) K reads erroneously पुटीत (13) K has प्रशस्तो जारण विडु, wherein the first term is gram inc (14) M reads म कचूर्ण तु

शतशो विषसिन्धूत्य[1] सयुत[2] वडवामुखम् ॥ ५ ॥
टङ्कणं शतशो देवि भावयेत् किंशुकद्रवैः ।
विडो वह्निमुखाख्योऽय[3] लोहाना जारणे प्रिये ॥ ६ ॥
चूलिका गन्धपाषाण [4] कान्तस्य च मुखे प्रिये ।
एकैकमेव[5] पर्य्याप्त लौहचूर्णस्य जारणे[6] ॥ ७ ॥
गन्धतालकसिन्धूत्थं[7] चूली[8]टङ्कणभूखगम[9] ।
क्षारैर्मूत्रैश्च विषचेदय[10] ज्वालामुखो विड [11] ॥ ८ ॥
एकविंशतिपर्य्याय देवदालीदलद्रवै [12] ।
भावितो निचुलक्षार सर्व्वसत्त्वानि जारयेत् ॥ ९ ॥
वासुकीरण्डकदली[13] देवदाल्योपनर्नवम[14] ।
वासा[15]पलाशनिचुलं तिलकाञ्चन[16]माचिकम् ॥ १० ॥

---

(1) K reads विषसौन्धूत्य M reads विषसिन्धत्थं (2) K reads सन्धित M reads सयुत We have adopted the above reading after collating the texts (3) M has वह्निविडाख्योऽयं (4) K reads पाषाण which is gram incorrect M reads भवपाषाण (5) तैकवदैकं is the reading in M wherein the last term is inc (6) K has an incomplete charana—लौहचर्णजारणे M has लौहचारणजारणे (7) M reads सिन्धुत्थ (8) K reads चलि (9) K has मृखग or correctly भूखग (10) M reads विषचन्द which is evidently an error (11) K reads विडु which is inc (12) देवदालिकाद्रवै a variant in K (13 M reads वासुकारण्डकदली which is not gram correct (14) K reads पुनर्नव M read देवदालीपुनर्नवम् (15) M reads वासा (16) M reads तिलकाञ्चन

सर्व्वाङ्गं खण्डशश्छिन्नं[1] नातिशुष्कं[2] शिलातले[3] ।
दग्धकाण्डैस्तिलानां तु पञ्चाङ्गं मूलकस्य च ॥ ११ ॥
प्लावयेन्मूत्रवर्गेण जलं तस्मात् परिस्रुतम्[4] ।
लोहपात्रे पचेद्यन्त्रे हसपाकेऽग्निमानवित्[5] ॥ १२ ॥
वाष्पाणां[6] बुद्बुदानाञ्च बहूनामुद्गमो यदा ।
तदा कार्पाससौराष्ट्री क्षारत्रयकटुत्रयम् ॥ १३ ॥
गन्धकञ्च[7] सितं हिङ्गु लवणानि च षट् तथा ।
एषां चूर्णं क्षिपेद्देयं[8] लोहसम्पुटमध्यगः[9] ।
सप्ताहं भूगतः पश्चाद्धान्यस्थः प्रवरो विडः ॥ १४ ॥
जम्बीराम्लेन पचनं[10] शिग्रुमूलद्रवेण च ।
चूलिकागन्धकासिक्तौ[11] द्वौ विडौ शतशः क्रमात् ॥ १५ ॥
कोषातकी[12]दलरसः क्षारैर्वा निचुलोद्भवैः[13] ।

---

(1) खण्डशश्छिन्ना is the incorrect variant in M (2) M has नातिशुष्का which seems to be inc (3) K reads शिलातल, which is gram inc (4) K reads परिस्रुत which destroys the metre M has जातिलक्षात् परिस्रुतम्, which has neither grammar nor sense (5) हस पाकाग्निमानवित् a variant in K (6) K reads वाष्पाणां which is incorrect (7) K and M read गन्धकस्य which is inc (8) M reads क्षिपद्देतत्, which is not gram correct (9) M reads मध्यगम्, which is not gram correct (10) M reads प चन, which is inc (11) K reads सिक्तो M reads सिक्ता Both the readings are not correct (12) M reads कोषातकी (13) K has क्षारो वा M has क्षारा वा निचुलद्रवै

देवदालीशिवावीजं[1] गुञ्जासैन्धवटङ्कणम्[2] ।
भावयेदम्लवर्गेण[3] विडोऽयं हेमजारणे[4] ॥ १६ ॥
मूलकार्द्रक[5]चित्राणां क्षारैर्गोमूत्रगालितैः ।
गन्धकं शतशो भाव्यो विडोऽयं हेमजारणे ॥ १७ ॥
हरितालशिलाक्षारो[6] लवणं[7] शङ्खशुक्तिका[8] ।
रसपाकविपक्वोऽयं विडः स्याद्धेमजारणे ॥ १८ ॥
एवं सङ्गृह्य सम्भारान् रसकर्म समाचरेत् ।
तन्ममाचक्ष्व देवेशि किमन्यच्छ्रोतुमिच्छसि ॥ १९ ॥

इति श्रीपार्वतीपरमेश्वरसंवादे[9]
रसार्णवे रससंहितायां
विडकथनं नाम[10]
नवमः पटलः ॥९॥

---

(1) K reads शिवबीजं M reads देवदालीशिवा which is a complete
(2) M read गुञ्जाटङ्कणसैन्धवम् (3) भावयेदम्लवर्गेण a variant in M
(4) विडश्चा हेमजारणे a variant in M wherein the first term is incorrect
(5) M reads erroneously मूलकाद्रक (6) K reads क्षारे (7) K reads लवणं (8) K has शङ्खशोक्ता which destroys the metre
(9) This portion is not found in M (10) M reads विडकथनं नाम

# दशमः पटलः ।

श्रीदेव्युवाच ।

रसस्य लक्षणं किंवा रसकर्म च कीदृशम् ।

तन्न जानामि देवेश वक्तुमर्हसि तत्त्वतः ॥ १ ॥

श्रीभैरव उवाच ।

प्रागेवोक्ता रसोत्पत्तिस्तल्लक्षणमतः[1] शृणु ॥ २ ॥

तस्य नामसहस्राणि अयुतान्यर्बुदानि च ।

शक्यते न मया वक्तुं सक्षेपात् कथ्यते शृणु ॥ ३ ॥[2]

रसो रसेन्द्रः सूतश्च पारदश्चाथ मिश्रकः[3] ॥ ४ ॥

रस सिद्धरस विद्यात् सिद्धक्षेत्रसमाश्रयम् ।

नाशयेत् सकलान् रोगान् वलीपलितमेव सः[4] ॥ ५ ॥

देहलोहकरं शुद्ध[5] रसेन्द्र[6]मधुना शृणु ।

शरीरे हन्ति कर्त्ता च जारणे सारणासु च ॥ ६ ॥

---

(1) K reads रसोत्पत्तितल्लक्षणमत, which is grammatically incorrect (2) This śloka is not found in M (3) M reads मिश्रकम् [Vide रस स Chap I v 68] (4) K reads वलि M reads पलितनाशनम्, which is inc [Vide रस स Chap I vs 69 and 77] (5) M reads सिद्ध (6) But vide रस स Chap I, vs 70—72 and 78 which state सूत instead of रसेन्द्र

ईषत्पीतश्च रूक्षाङ्गो दोषयुक्तश्च सूतक ॥ ६ ॥ (कं)[1]
यो वाह्याभ्यन्तरे श्वेतो[2] बहुल[3] कञ्चुकावृत ।
स विद्यात्[4] पारद देवि तारकर्म्मणि योजयेत् ।
यथा काञ्जिकसंस्पर्शात् क्षीरभाण्ड[5] विनश्यति ।
तथा हेम शरीरश्च[6] पारदेन विनश्यति ॥ ७ ॥
मयूरपचिकाभास[7] मिश्रकश्च विदुर्बुधा ।
धूम्रवर्ण रस[8] दृष्ट्वा विशेषेणोपलभ्यते ।
मिश्रकन्तु[9] विजानीयादुद्दाहकर्म्मकारकम्[10] ॥ ८ ॥
एव पञ्चविधा देवि रसभेदा निरूपिता ॥ ९ ॥[11]
स्वेदन मर्दन चैव चारण[12] जारण तथा ।

---

(1) After the 6th sloka we do not find in any of our MSS a śloka which defines सूत Hence we have inserted the above hemistich from रस स [Chap I v 72] in order to complete the list of 5 different sorts of quicksilver, i e रस रसेन्द्र सूत पारद and मिश्रक (2) M has वाह्याभ्यन्तरस्वन्नो (3) K reads बहुलं M reads बहुल (4) M reads विद्यात [Vide रस स Chap I v 73] (5) M reads चौरे भाण्ड which seems to be inc. (6) K reads शरीरस्तु which is not correct (7) मयूरपक्षकाभास a variant in M [Vide रस स Chap I v 74 which states—"मयूरचन्द्रिकाच्छाय स रसो मिश्रको मत "] (8) M reads चञ्चक रसं (9) K reads मिश्रकम्, which is inc. (10) K reads कारकं which is gram. incorrect M has an incomplete charana—कमकारकम् (11) This hemistich is wanting in M (12) K reads मारण [Vide रस स Chap VIII v 78]

द्रावणं रञ्जनं चैव सारणं[1] क्रामणं क्रमात् ।
इति यो वेत्ति तत्त्वेन तस्य सिध्यति सूतकः ॥ १० ॥
तीव्रत्वं जायते[2] स्वेदात् अमलत्वञ्च मर्दनात् ।
चारणेन[3] बलं कुर्यात् जारणाद्बन्धनं भवेत्[4] ॥ ११ ॥
एकत्व द्रावणात्[5] तस्य रक्तत्वं रक्तकाञ्चनात्[6] ।
व्यापित्व सारणात्[7] तस्य क्रामित्वं क्रामणात्तथा ॥ १२ ॥
जलगो जलरूपेण त्वरितो[8] हंसगो भवेत् ।
मलगो मलरूपेण सधूमो धूमगो भवेत् ॥ १३ ॥
अन्या[9] जीवगतिर्देवि जीवोऽण्डादिव निष्क्रमेत्[10] ।
स तावज्जीवयेज्जीवं[11] तेन जीवो रसः[12] स्मृतः ॥ १४ ॥
चतुष्टयो गतिस्तस्य निपुणेन तु लभ्यते[13] ।

---

(1) K reads चारण [Vide रस स Chap VIII. v 70] (2) M reads जमरत् (3) K reads सारणेन (4) K reads विभो- (5) K has an incomplete charana—स्तुत्व द्रावणात्स्य. M reads द्रावण- (6) K reads रक्तांशनात्, which mars the metre (7) K has चारणात् M has सारण (8) K has जलगोमलरूपेण तारीतो, which seems to be inc. M has कारितो in lieu of त्वरितो [Vide रस स Chap I vs. 82–85, the readings whereof mostly agree with the above texts (13 to 16).]. (9) M reads चन्या, but रस स reads चन्या (10) K reads ण्डादिव, which is incorrect M reads जीवोऽण्डादिव निष्क्रमेत्, which is senseless. (11) सञ्जीवं जीवयेज्जीवं, a variant in M Cf रस.स Chap. I. v 84 —स वि जीवयञ्जीवान् (12) M reads जीवरसः, which is not correct. (13) M reads रच्यते.

चतस्रो गतयो दृश्या अदृश्या[1] पञ्चमी गतिः ॥ १५ ॥
मन्त्रध्यानादिना तस्य क्षीयते[2] पञ्चमी गतिः ॥ १६ ॥
धूमशिटिचिटिश्चैव[3] मण्डूकप्लुतिरेव च ।
अकम्पश्च विकम्पश्च[4] पञ्चावस्था रसस्य तु ॥ १७ ॥
मथ्यमानस्य[5] कल्केन सम्भवेद्धि गतित्रयम्[6] ।
जले गतिर्मलगतिः पुनर्हंसगतिस्ततः[7] ॥ १८ ॥
हिमं[8] दत्त्वा ततः शुद्धं तत्तु स्तम्भेन्नियामके[9] ।
नियामकगणौपध्या[10] रसं दत्त्वा विपाचयेत् ॥ १९ ॥
नियमितो[11] न प्रयाति तथा धूमगतिं[12] प्रिये ॥ २० ॥
कणिकाचालरहितो बुद्बुदैश्चापवर्जितः[13] ।
नियमितो भवत्येष[14] चूल्लिकाग्निसहस्तथा[15] ॥ २१ ॥

---

(1) M reads न दृश्या. Cf रस.ज., which exactly agrees with the above (2) रस.स reads दृश्यते [Vide Chap I v. 85] (3) K reads धूमशिरीचिटिश्चैव M reads धूम्र instead of धूम (4) K has सपक्षश्च विपक्षश्च (5) M reads मथ्यमानस, which appears to be inc (6) K reads erroneously सम्भवेद्धौ गतित्रये M reads सम्भवेद्दे गतित्रयम् which is not perfectly correct. (7) M has जलेन विमलगतिस्तथा हंसगति पुन (8) K reads हस. (9) K has ततस्तम्भ नियामयत् M has स्तम्भस्तम्भे नियामके (10) नियामकगणौ विध्यौ, a variant in M (11) K reads नियमार्गीतो which destroys the metre All the texts read नियमितो which is gram inc (12) K reads धूमगतिः. (13) K has बुद्बुदस्यापवर्जित M has बुद्बुदयापवर्जित, which is inc. (14) M read भवत्येव (15) चूल्लिकाग्निसहस्तथा, a variant in K.

अनियम्य यदा[1] सूत जारयेत् काञ्जिकाश्रये[2] ।
जायते निश्चित भद्रे तदा[3] तस्य गतित्रयम् ॥ २२ ॥
दोलास्वेदेन चावश्य[4] स्वदितो हि दिनत्रयम्[5] ।
वसुभण्डादिभि[6]र्देवि रसराजो न[7] हीयते ॥ २३ ॥
अचीरा तु रस दृष्ट्वा दद्या[8]द्ग्रासमादिक तत ।
स्वेदन च[9] तत कर्म्म दीयमानस्य मर्दनम् ॥ २४ ॥
रसालिङ्गित आहार:[10] पिष्टिकेत्यभिधीयते ।
तद्द्रुत रसगर्भे तु जारण परिकीर्त्तितम् ॥ २५ ॥
जारणा तत्समाख्याता तद्वेद्याभ्युपलभ्यते[11] ।
जीर्णान्ते रञ्जन कार्य्य रक्तवर्ग[12]गणेन च ॥ २६ ॥
जीर्णे जीर्णन्तु[13] सरक्त[14] समहेम्ना तु सारयेत् ।
सारणायन्त्रयोगेन बध्यते सारितो[15] रस ॥ २७ ॥

---

(1) M reads यथा which seems to be incorrect (2) जालयेत् काञ्जिकाश्रय a variant in K (3) M reads यथा which is not correct (4) K reads दाल स्वदनतोऽवश्य M reads डाला in place of दोला (5) The portion commencing from दिनत्रयम् and ending in रसराजो न ही is wanting in K (6) M reads वसुभट्टादिभि (7) M has रसराजन which is not accurate (8) K reads देया which is gram inc (9) K reads तु (10) रस लिङ्गीतकाहार, an incorrect variant in K (11) K has नाम्बय भोपलभ्यते (12) K reads रक्तवर्ण (13) M reads जीर्णाजीर्ण तु (14) M reads सरक्त (without अनुस्वार) (15) M has सारता which seems to be the error of the scribe

मारितं मारितश्चैव[1] यथा भवति सूतकः ।
क्रामणेन समायुक्तं तथ[2] वेधे नियोजयेत् ॥ २८ ॥
खारोट[3] पारदो ब्रह्मा मूर्च्छितस्तु जनार्दनः ।
बद्धस्तु रुद्ररूपः स्यात्[4] कर्म्मयोगबलाद्रसः ॥ २९ ॥
शृणु देवि प्रवक्ष्यामि कर्म्मयोगस्य विस्तरम् ॥ ३० ॥
पारदस्य त्रयो दोषा विष वह्निर्मलस्तथा[5] ।
विषेण सविषं विद्यात्[6] षण्ढो कुष्ठी भवेन्नरः ।
मलेनोदररोगी स्यात् म्रियते च रसायने ॥ ३१ ॥
षट्चुल्यश्चैकलिक्षा स्यात्[7] षट्लिक्षा यूक एव च[8] ।
षट्यूकास्तु रजःसंज्ञा[9] कथितास्तव सुव्रते ॥ ३२ ॥

---

(1) खारोत चरितचैव an incorrect variant in K. मारितमारितचैव a variant in M, wherein the middle term is incorrect (2) K and M read तथ which is gram incorrect (3) M reads खराट [रस स defines खराट thus —"सुशोधितो रस सम्यगारोट इति कथ्यते" Chap XI v 60 Cf "मलहीनो यदा सूत पितामहसमो भवेत् । स बद्धो विश्वरावाती रञ्जित शिव उच्यते ॥" रससार, 1st Patala, v 5] (4) K has an incorrect reading—वद्रूपा स्यात् (5) M reads विषवह्निजलस्तथा, wherein the term जल is incorrect [Vide रस स Chap. XI v 14] (6) K reads दद्यात् M reads विन्द्यात् [Vide रस स Chap XI v 15] (7) M reads सदा [रस स. agrees closely with the texts in vs. 32, 33 and 34. Vide Chap X vs. 102–105] (8) K reads incompletely the whole hemistich thus —ष दश्चैव चा स्यात् षड्लिक्षायुमेव च M reads यूकमेव च ।
(9) चाकरच रज सज्ञा a variant in M, which seems to be inc.

षड्रजः सर्षपः साक्षात्[1] सिद्धार्थः स च कीर्त्तितः[2] ।
षट्सिद्धार्थैश्च देवेशि यवस्त्वेकः प्रकीर्त्तितः ॥ ३३ ॥[3]
षड्यवैरेकगुञ्जा स्यात्[4] पञ्चगुञ्जाश्चैकमाषकः ।
माषा द्वादश तोलः स्यात्[5] अष्टौ तोलाः पलं भवेत्[6] ॥३४॥
द्वात्रिंशत्पलकं देवि शुभन्तु[7] परिकीर्त्तितम् ।
शुभस्य तु सहस्रे द्वे भार एकः प्रकीर्त्तितः ॥ ३५ ॥
द्वे सहस्रे पलानान्तु सहस्रं शतमेव वा ।
अष्टाविंशत् पलानान्तु दश पञ्चकमेव वा ॥ ३६ ॥[8]
पलाद्यैनैव[9] संस्कारः कर्त्तव्यः सूतकस्य तु ॥ ३७ ॥
महाबला नागबला मेघनादा पुनर्णवम्[10] ।
मेषशृङ्गी[11] च तत्सारैः[12] नवसारसमन्वितम्[13] ।

---

(1) M reads षड रकः, which is an error of the scribe रस स reads स स्यात् . (2) K has सिद्धार्थ स च प्रकीर्त्तित, wherein प्र is redundant. (3) This hemistich is wanting in K. रस स reads षट्सिद्धार्थैर (4) रस स. has तु instead of स्यात् After this charana we find in रस स "त्रिगुञ्जा वल्ल उच्यते । षड्भिरव तु गुञ्जाभिर्माष एक प्रकीर्त्तित ।" (5) माष द्वादश वाला स्यात्, a variant in K (6) K has सचतुभि पल भवेत्, thus differing from other texts as well as from रस स [Vide Chap. X v 105] (7) K reads शुभन्तु M reads शुभस्तु (8) This sloka nearly agrees with रस स [Vide Chap XI v 21] (9) M reads पलाद्यून न (10) K reads पुनर्णवा (11) K reads मेषशृङ्गा (12) K reads तत्सारे (13) M reads एव सारसमन्वितम्, which appears to be incorrect.

पारदं देवदेवेशि स्वेदयेद्दिवसत्रयम् । ३८ ॥

॥ इत्योषधस्वेदनम् ॥[1]

गिरिकर्णी च मोनाची सहदेवी पुनर्णवा ।
उरगा त्रिफला कान्ता[2] लघुपर्णी[3] शतावरो ॥ ३९ ॥
तुषवर्जं तु धान्याम्ले[4] सर्व्वं सत्तुभ्य[5] निक्षिपेत् ।
एकादशगुणे[6]ऽम्लेऽस्मिन् षोडशांशैर्विमर्द्दितम् ॥ ४० ॥
आसुरोलवणव्योष चित्रकार्द्रकमूलकैः[7] ।
दोलाया[8] स्वेदयेद्देवि त्रिदिन मृदुनाग्निना ॥ ४१ ॥

॥ इति सन्धानाम्लस्वेदनम् ॥

अङ्कोलस्तु[9] विष हन्ति वह्नि[10]मारग्वधः प्रिये ।

---

(1) K has इत्यौषधिस्वेदन तु कथितं तव सुव्रते। After this we find in K the following verses which we have rejected as these seemed to us incongruous, incorrect and unconnected with the text —

षडसर्वपसाया सिद्धार्थे स च ।
स्वेदनं मर्दन मूर्छा स्थापनं पातन विधौ ।
निरोधन नियाम च दीपन चानुवासनम् ।
चारण जारणं चैव गर्भे बौह्या द्रुति तथा ।
रंजनं चारण चानुसारणा प्रतिसारणा ।
क्रामण दिव्य कर्त्तव्यं रससाधके । ४०

(2) K reads क्रान्ता (3) K reads लघुपर्णा (4) तुषवर्ज्यांसुधान्याम्ले, a variant in K. (5) K reads सत्व M reads सुचोष्ण (6) एकाद्दोगुण, an incorrect variant in K. (7) Vide रस म Chap XI v 23. (8) M reads दलायां (9) M reads अङ्कालेन्तु which is gram inc (10) K reads वह्नी, which is inc.

चित्रकास्तु[1] मलं हन्यात् कुमारी सप्तकञ्चुकम् ॥ ४२ ॥[2]
तस्मादेभिः समोपेतै[3]र्मर्दयेत् पातयेद्बुधः[4] ॥ ४३ ॥
विद्याधरेण यन्त्रेण भावयेद्दोषवर्जितम्[5] ।
ततस्त्रिगुणवस्त्रस्थं[6] तं रसं देवि गालितम्[7] ॥ ४४ ॥
त्रिफलावह्निमूलत्वात्[8] गृहकन्या[9]रसान्वितम् ।
निरुद्गारे[10] तु पाषाणे मर्दयेत् पातयेत् पुनः ॥ ४५ ॥
धूमसारगुड[11]श्चैव रजनीसित[12]सर्षपैः ।
इष्टिकाकाञ्जिकोर्णाभिः[13] त्रिदिनं मर्दयेत्ततः[14] ॥ ४६ ॥
निर्मलो जायते सूत [15] सत्प्रभावं प्रकाशयेत्[16] ॥ ४७ ॥
वासकेन[17] विभीतेन मर्दयेत् पातयेत् पुनः ।
नागवङ्गादिका दोषा यान्ति नाशमुपाधिजाः[18] ॥ ४८ ॥

---

(1) M reads चित्रकश्च (2) But compare रसं स Chap XI v 28, which differs from the above in certain points (3) K reads समोत्थैते, which is incorrect M reads तथादेतत् (4) K reads पुन After this sloka we find नागार्द्ध in the Ms. M (5) K has वर्जित, which is gram erroneous. (6) K has ततस्त्रीगुर्णनैवस्त्र which is partly inc. [नैत्र=वस्त्र] (7) M reads भावितम् (8) त्रिफलामूलवह्नित्वात् a variant in K (9) K reads erroneously इहकन्या (10) K reads निरुद्दारे, which has no clear sense (11) K has गुडा M has इुल (12) K reads श्वेत (13) K reads इष्टका M reads काञ्चिकोणाभि (14) K has मर्दित तत (15) K and M read सत्व (16) M reads चात्मभागात् प्रकारयत् (17) M reads वासकेन (18) K reads नाशमुपाधिया M reads नाशमुपाधिका

सप्तवारं काकमाच्या गतदोष[1] विमर्दयेत् ।
पातयेत्[2] सप्तवार च गिरिदोष त्यजेद्रस[3] ॥ ४९ ॥
चैत्रदोष त्यजेद्देवि गोकर्णरसमूर्च्छित ॥ ५० ॥
कार्पास[4]पत्रनिर्यासे स्विन्नस्त्रिकटुकान्विते[5] ।
सप्तकञ्चुक[6]निर्मुक्त सप्ताहाज्जायते रस ॥ ५१ ॥
काकमाची[7] जया ब्राह्मी[8] गाङ्गेरी[9] रक्तचित्रक[10] ।
मण्डूकी[11] मुद्गपर्णी च शृङ्गवेर रसाङ्कुश[12] ॥ ५२ ॥
देवदाली[13] शङ्खपुष्पी काकजङ्घा शतावरी ।
कुमारी भृङ्गराजश्च निर्गुण्डी ग्रीष्मसुन्दर[14] ॥ ५३ ॥
शूलिनी शूपपर्णी च[15] गोजिह्वा चीर[16]कञ्चुक ।
तद्रसैर्मर्दित[17] पात्य[18] सप्तधा निर्मलो भवत् ॥ ५४ ॥
ताम्रण[19] पिष्टिका कृत्वा पातयेदूर्ध्वपातने[20] ।

---

(1) K has गतदेह wh ch has no clear sei se (2) M read पापयेत् (3) M reads जयद्रस (4) K reads कपास (5) K reads त्रिकटकान्वित स्विन्न स्त्रिकरकान्विते a variant in M (6) M reads काञ्चकि (7) K reads काकम चि (8) M reads ब्रह्मी (9) K reads मागारी (10) M reads रक्तचित्रकम् (11) K read मडूका M reads मण्डाकी (12) K has समांकस. M has शङ्गवेर (13) दवताली is the read g in M (14) ग्रीष्मसुन्दरम् s the varian in M (15) च is wanti g in K M reads शुपपाली च (16) K reads चिर wh ch s inc. (17) K reads सुवस M reads मर्दिद wh ch is gram inc. (18) K reads प त्य M reads पात्य Both ar gram inc. (19) K reads ताम्रेण रस स reads गुञ्जन (20) K reads ऊर्ध्वपातने wh ch is an error of the scr be But रस स reads ऊर्ध्वभाजने

यद्गनागौ परित्यज्य शुद्धो भवति सूतकः ॥ ५५ ॥[1]
मर्दितः[2] त्रिफलाशिग्रुराजिका[3]पटुचित्रकैः।
ऊर्द्धभाण्डगतः पाच्यः प्रदीप्तैरुपलैरथ।[4] ॥ ५६ ॥
सध्यम्बुजनिरोधेन लब्धापायो भवेद्रसः।
कर्कोटो[5]वाचुकोबिम्बो सर्पाक्ष्यम्बुजसयुतम् ॥ ५७ ॥
रस नियामके दद्यात् तेजस्वी निर्मलो भवेत्।
एव विशोधित सूतो भद्राष्टाशविशोधित ॥ ५८ ॥[6]
चुद्राम्ललवणक्षार[7] भूखगोपणशिग्रुभि[8]।
काजिकाटङ्कणयुतैरारनालैः[9] दिनत्रयम्।
स्वेदनाद्दीपितो देवि ग्रासार्थी[10] जायते रस ॥ ५९ ॥[11]
व्योमसत्त्वादिबीजानि रसजारणशोधने[12]।
तन्ममाचक्ष्व देवेशि[13] किमन्यच्छ्रोतुमिच्छसि ॥ ६० ॥

---

(1) This hemistich closely agrees with रस स (vide Chap XI v 31) (2) M reads मर्दित which is gram inc (3) M reads रायका (4) प्रदीप्तरकफलैरथ, a variant in M which appears to be inc (5) M reads कर्कटी. [Vide रस स Chap XI vs 41 and 42] (6) The slokas 57 and 58 are not found in K (7) चौद्रसलवणक्षार a variant in M (8) भूखगोपणशिग्रुभि, a variant in K (9) K reads आरनाले (10) K reads ग्रासार्थि which is gram inc M reads ग्रासार्थी (11) The 43rd sloka in रस स Chap XI mostly agrees with the 59th sloka of this text (12) रसे जारण शोधने, a variant in K. रसो जारण शोधिते a variant in M Both of these readings do not convey a clear sense (13) This charana is not found in M

इति श्रीपार्व्वतीपरमेश्वरसंवादे[1]
रसार्णवे रससंहितायां
रसशोधनो नाम[2]
दशम पटल ॥१०॥

## एकादश पटल ।

श्रीदेव्युवाच[1] ।

लक्षण शोधन चैव पारदस्य श्रुत मया ।
चारण जारण चव श्रोतुमिच्छामि भरव ॥ १ ॥

श्रीभैरव उवाच[2] ।

सर्व्वपापक्षये जाते[3] प्राप्यते रसजारणा[4] ।
तत्प्राप्तौ प्राप्तमेव स्याद्विज्ञानं[5] मुक्तिकारणम् ॥ २ ॥
मोक्षाभिव्यञ्जकं[6] देवि जारण साधकस्य तु ।
यावन्न जार्य्यते[7] सूत तावत्तु न च निर्वृत्ति[8] ॥ ३ ॥

(1) This is wanting in M   (2) K and M read रसशोधन नाम

(1) M has only देवी   (2) M has only भैरव   (3) K reads सर्व्वपापक्षय तस्य   (4) K reads रसजारणात्   (5) M has विज्ञानं   (6) M reads मोक्षाभिव्यञ्जन   (7) यावन्न दृश्यते a variant in K, यावन्न जायते, a variant in M   (8) K has an incomplete charana—तावन्न च तिष्ठति

खल्लस्तु पीठिका[1] देवि रसेन्द्रो लिङ्गमुच्यते ।
मर्दनं वन्दनं[2] तस्य ग्रास पूजा[3] विधीयते ॥ ४ ॥
यावद्दिनानि वह्निस्थो जार्य्यते[4] धार्य्यते रस ।
तावद्युगसहस्राणि शिवलोके महीयते ॥ ५ ॥
दिनमेकं रसेन्द्रस्य यो ददाति हुताशनम्[5] ।
द्रवन्ति तस्य पापानि कुर्व्वन्नपि न लिप्यते ॥ ६ ॥
जारणा द्विविधा बाल[6] जारणा वृद्धजारणा[7] ।
तत्रादौ परमेशानि वक्ष्यते बालजारणा ॥ ७ ॥[8]
गगनं जारयेदादौ सर्व्वसत्त्वमत परम् ।
ततो माक्षिकशुद्ध च[9] सुवर्णं तदनन्तरम ॥ ८ ॥
गर्भस्थ द्रावयित्वा तु[10] ततो बाह्यद्रुति[11] द्रवेत् ।

---

(1) K reads खल्ल तु पिठिका M reads खल्लन् (2) M has चदन which is incorrect (3) K reads पुजौ wh ch is incorrect (4) M reads कारणा wh ch seems to be gram inc. (5) M has सिताशनम् which has no clear sense (6) K reads बाला M reads विविधा बाल (7) K reads जारणाद्दभग्रुपातना which is unintell gible. वृद्धजारणा will be expla ned in the 13th Patala. (8) This hemistich is not found in M. [Vide रस स Chap VIII vs 65 and 66 which state जारणा first as चिद्रूपा and next as द्विविधा] (9) K has माक्षिकयद्ध च We do not find this charana and the next in M, (10) गर्भे संद्रावयित्वा तु a variant in K, which is gram. inc. (11) M reads बाह्यद्रुतिं which seems to be inc [Vide रस स Chap VIII v 72, wherein बाह्यद्रुति is explained ]

सितं सितेन द्रव्येण रक्तं रक्तेन रञ्जयेत् ॥ ९ ॥
सारण क्रामण ज्ञात्वा ततो वेधं प्रयोजयेत् ॥ १० ॥[1]

॥ चारणजारणमन्त्रः ॥

ॐ नमोऽमृतलोहाय परामृतरसोद्भवाय हुं स्वाहा ॥११॥
सर्व्वसत्त्वोपकाराय भगवन् त्वदनुज्ञया ।
जारणं कर्त्तुमिच्छामि ग्रासं गृह्ण[2] मम प्रभो ॥ १२ ॥
कुरुष्वेति शिवेनोक्तं ग्राह्यमेव[3] सुबुद्धिना ॥ १३ ॥

शृणु देवि प्रवक्ष्यामि व्योमजारणमुत्तमम् ।
पत्राभ्र[4]जारणे सत्त्वजारणञ्चेति तद्द्विधा[5] ॥ १४ ॥
निर्मुख समुख[6] चैव वासनामुखमेव च ।
एकैक त्रिविधं तच्च तद्वक्ष्याम्यानुपूर्व्वशः[7] ॥ १५ ॥
वैक्रान्त[8]वज्रसस्पर्शात्[9] दिव्यौषधिबलेन वा ।
निर्मुखो भक्षयेद्देवि[10] क्षणेन गगन रसः[11] ॥ १६ ॥

(1) This hemistich is wanting in M. (2) K reads ग्राह्य M reads गृह्य Both the readings are gram inc. [गृह्ण is generally used by Rishis though the correct form is गृहाण ] (3) भावमेव सुबुद्धिमान्, a variant in K ग्राह्यमेव, a variant in M (4) M reads पत्राभ्रं, which appears to be incorrect. (5) K reads erroneously तद्विधं. (6) K has निमुखं M has सम्मुख रस म. reads—"सहुखा निमुखा चेति जारणा द्विविधा पुन ॥" "इय हि सम्मुखा माता जारणा मृगचारिणा ॥" (Chap. VIII, vs. 66 and 69) (7) K and M read तदवक्षाम्यनुपूर्व्वश. (8) M reads वैकृन्त, which is inc. (9) K and M read सस्पर्श (without any suffix), which seems to be inc. (10) भक्षयेद्देवि, a reading in K. (11) M reads रसम् which is gram. erroneous

हेमकर्म्मणि हेमैव तारे तारो मुखं[1] भवेत् ॥ १७ ॥
तप्तखल्लकृता पिष्टिः[2] ऋक्ष्ण[3]मल्पाल्पमभ्रकम् ।
अम्लवेतस[4]जम्बीरवीजपूराम्लभूखगैः[5] ।
मर्दितं[6] चरते देवि सेयं समुखजारणा[7] ॥ १८ ॥
क्षारत्रयं[8] पञ्चपटु[9] काञ्ची[10]-काशीसगन्धकम् ।
माक्षिकं चाम्लसंयुक्तं ताम्रपात्रे तु जारयेत्[11] ॥ १९ ॥
एतच्चाभिषवाद्[12]दिव्यं जारयित्वा विचक्षणः ।
जारणार्थञ्च बीजानां[13] वज्राणाञ्च विशेषतः ॥ २० ॥
तस्मिन्नावर्त्तितं नागं वङ्गं[14] वा सुरवन्दिते ।
निषेचयेच्छतं वारं म रसायनकर्म्मणि ॥ २१ ॥
अनेन सकलं देवि[15] चारणावसु भावयेत्[16] ।
क्षाराम्ले[17] भावितं व्योम रजसा प्रथमेन च ॥ २२ ॥

---

(1) रस स defines मुख thus —"ग्रह स्वर्णं च रूप्य च वीजमित्यभिधीयते ॥६७॥ चतु षष्टांशतो वीजप्रक्षेपो मुखमुच्यते । ६८ ।" (Chap VIII.) (2) तप्त खल्ले कृतापिष्ट, a variant in K M reads कृताविष्टि (3) K reads सूक्ष्म (4) M reads आम्लवेतस (5) K has वीजपूराम्लभूखगै, which is gram, inc (6) M reads मृदित (7) K has जारणात् M has सम्यखजारणा (8) K reads चारत्रय (9) K reads पंचलवण M reads पञ्चवटु, which seems to be incorrect (10) K has कांजि. M has काचि (11) K reads सारयेत् (12) एतच्चाभिषव, a variant in K. (13) जारणार्थे तु वीजानि, a variant in K (14) M reads वङ्ग (15) अनेन स चारणं वसु, a variant in K. (16) सारयेत्-शक्तिवचय, a variant in K (17) K reads चाराम्ल

एटिचयोदककणा[1] तुम्बुरुद्रवमर्दितम्[2] ।
चरेज्जरेद्वा पुटित[3] यवचिञ्चारसेन च ॥ २३ ॥
शतावरी गदा रम्भा मेघनादा पुनर्नवा ।
शिग्रुको यवचिञ्चा च भावित तद्रसे क्रमात् ॥ २४ ॥
मूल छिन्नमुचायाम्[4] कौवेरीमूलमेव च ।
कदलीमुसलीशिग्रु-ताम्बूलीबाणपीलुकम्[5] ॥ २५ ॥
कलम्बुषा बला कोल मास्फोट खरमञ्जरी ।[6]
तुम्बुरुस्तिक्तशाक वाप्येषामेकरसेन तु ।
काञ्जिकाख्योपयुक्तेन त्रिदिन खिन्नमभ्रकम् ॥ २६ ॥
काशीसतुवरीसिन्धु[7] टङ्कणक्षारसयुत[8] ।
पूर्वाभिषव[9]योगेन सूतकञ्चरति क्षणात् ॥ २७ ॥
गोलका[10] भवति क्षिप्र सर्वसिद्धिप्रदायक.[11] ॥ २८ ॥
गृहीत्वा देवि धान्याम्ल मल्लवर्गेण[12] सयुतम् ।

---

(1) K reads शठी M reads सट Both the read ngs are incorrect. (2) M reads तुम्बुरुरसमर्दितम् (3) याजयद्दी पटी चैक a variant in K, which seems to be unconnected with the text (4) K reads erroneously छिनुमय य मु (5) K has कालपीलुका (6) This hem st ch and the next two are not found in K (7) K reads कौशीसतुवरीसौधु which is inc (8) K has सयुत which is gram inc. M has टङ्कण चारसयुत wh ch is partly inc (9) K read पुराभिषया which is inc (10) K has गोलक (11) सर्वसिद्धिप्रदायक a variant in K M reads प्रदयकम् which is gram inc (12) मल्लवर्गेण is the read i g in K wh ch is not correct

क्वाथयित्वाभ्रकं तत्तु[1] त्रुहीक्षीरेण[2] मर्द्दयेत् ॥ २९ ॥
आरण्य[3]गोमयेनैव कपोताख्यं पुटं[4] ततः ॥ ३० ॥
कदलीकन्दनिर्यासै[5]र्मूलकन्दरसेन च ।
काकमाची च मीनाक्षी अपामार्गो मुनिस्तथा[6] ॥ ३१ ॥
एरण्डमार्द्रकञ्चैव[7] मेघनादा[8] पुनर्नवा ।
एकैकस्य द्रवैरेव[9] पुटैकैकं प्रदापयेत्[10] ॥ ३२ ॥
वह्नीक्षीरेण संयुक्तं दोलायन्त्रेण[11] पाचयेत् ।
छायाशुष्कं ततः कृत्वा चणकाम्लेन संयुतम्[12] ॥ ३३ ॥
नवसारं च काशीसं वचा[13] निम्बं तथैव च ।
अभ्रस्य[14] षोडशांशेन एकैकं तत्र[15] निक्षिपेत् ॥ ३४ ॥
निधाय[16] ताम्रपात्रे तु घर्षयेत्तत्र[17] सुव्रते ।
नवसारं[18] ततो देवि लौहपात्रे तु जारयेत् ॥ ३५ ॥
रसेन सह देवेशि चणकाम्लेन काञ्जिकम् ।

---

(1) K reads क्वाथयित्वा भ्रमं स तु (2) M reads क्षुहिक्षीरेण. (3) M reads आरण्ये. (4) M reads कपोताख्यपुट. (5) M has निर्यासे. (6) K reads अपामार्गमुनी तथा. (7) K reads मार्द्रकयैव. (8) M reads मेघनाद (9) एकैकरसद्रवैकेन, a variant in K. (10) K has पुटकैक. M has सुदापयेत (11) M reads दोलायन्त्रेण. (12) K reads भैरवि (13) M reads वचा. (14) K reads अभ्रकात्. (15) M reads तत्तु (16) M reads निशारो, which is unintelligible (17) पर्वत ये च, a variant in K, which has no sense M reads घर्षयेत्तत्र. (18) K has निश्वारी, which is absurd

मृदग्निना तु दिनं कार्यं प्रहरार्धेन जायते ॥ ३६ ॥
सोमवल्लीरसैः पिष्ट्वा व्योम सौवर्चलान्वितम् ।
शनैः शनैर्हंसपाद्या[1] दापयेच्च पुटत्रयम् ॥ ३७ ॥
सोमवल्लीरसेनैव सप्तधारश्च दापयेत्[2] ।
पातयेन्मृन्मये भाण्डे[3] रसेन सह संयुतम् ॥ ३८ ॥
मूलं वल्लीपुष्पाया[4] गव्यक्षीरेण घर्षयेत्[5] ।
कल्केन लेपयेत् सूतं गगनञ्च तदर्द्धगम्[6] ॥ ३९ ॥
तापयेद्रवितापेन निर्मुखं ग्रसते क्षणात् ।
जायते पिष्टिका शीघ्रं नात्र कार्य्या विचारणा ॥ ४० ॥
तिलपर्णीरसेनैव गगनं भावयेत् प्रिये[7] ।
मर्दनाज्जायते पिष्टी[8] नात्र कार्य्या विचारणा ॥ ४१ ॥
मुण्डीनिर्यासके नागं[9] बहुशस्तु निषेचयेत् ।[10]
तेनाभ्रकं तु संप्राप्य[11] भूयोभूयः पुटे दहेत् ॥ ४२ ॥

---

(1) The portion commencing from रसेन सह and ending in देव पात्रे is not found in M (2) K reads दापयेत् (3) दारुजे मृन्मये पात्रे, a variant in K (4) K has त्रिपुष्पाया (5) गो क्षीरे सह पेषयेत् a variant in K, which is gram inc (6) K reads गगनं तदर्धकं. (7) कल्कं तेन भावयेत् a reading in K (8) M reads पिष्टि (9) K reads भागं (10) After this charak we find in K the following hemistich —कल्केन लेपयेत् सूतं गगनं तदर्धकं, which we have not adopted, seeing it to be the repetition of the latter half of the 39th sloka (11) K reads समाप्य

चित्रकार्द्रकमूलाना[1]मेकैकेन तु सप्तधा ।
प्लावितव्य[2] प्रयत्नेन गन्धकाभ्रकचूर्णकम् ॥ ४३ ॥
नागमुण्डीरसस्तन्य[3]रजो[4]लुङ्गाब्जभावितम् ।
षोडशांशेन तद्दत्तं दोलाया[5] तु चरेद्रसः ॥ ४४ ॥
चतुःषष्टि[6]गुणं देवि द्वात्रिंशद्गुणमेव वा[7] ।
अथवा षोडशगुणं तथाष्टगुणमेव वा[8] ।
चतुर्गुणं वा[9] द्विगुणं सम वा चारयेत्[10] प्रिये ॥ ४५ ॥
परमभ्रकसत्त्वस्य[11] जारणं शृणु पार्व्वति ॥ ४६ ॥
व्योमसत्त्व समांशेन ताप्यसत्त्वेन संयुतम्[12] ।
स खल्वेदं[13] चरेद्देवि गर्भद्रावी[14] भवेद्रस ॥ ४७ ॥
नागाभ्र देवि वङ्गाभ्रं[15] तीक्ष्णाभ्र[16]-करकाभ्रकम्[17] ।
ताराभ्र देवि[18] हेमाभ्र[19] रसगर्भेण[20] जारयेत् ॥ ४८ ॥

---

(1) K reads मूलानि (2) All the texts have this reading, which is gram erroneous, the correct form being प्लावयितव्य (3) K reads नाग मुण्डीरसस्तन्य (4) K reads रस लुङ्गाब्जभावितम् (5) M reads डालाया (6) K reads चतुषष्टि, which is inc (7) K reads च. (8) K and M read च, which is not accurate (9) M reads च. (10) K has सम जारयेत (11) K reads परस (12) K reads erroneously पुसक (13) K has सकल्वेन (14) K reads गर्भद्रावि M reads गर्भद्राव, Both the readings are gram incorrect (15) M reads वङ्गार्थ (16) K reads तिक्ताभ्र (17) K reads भास्कराभ्रकम् (18) K reads तु, which mars the metre (19) M reads पन्नाभ्र (20) K reads रसगर्भे, thus wanting one letter.

पूर्व्वाभिषेक[1]योगेन गर्भे द्रवति मर्दनात् ॥ ४९ ॥
चतुःषष्ट्यंशकः पूर्व्वः[2] द्वात्रिंशांशो द्वितीयकः[3] ।
तृतीयः षोडशांशस्तु[4] चतुर्थोऽष्टांश एव च[5] ॥ ५० ॥
पञ्चमस्तु चतुर्थांशः[6] षष्ठो ह्यर्धः प्रकीर्त्तितः[7] ।
ग्रासो रसस्य दातव्य[8] ससत्त्वस्याभ्रकस्य च[9] ॥ ५१ ॥
चतुःषष्ट्यंशके[10] ग्रासे दण्डधारी भवेद्रसः ।
जलौकावद्द्वितीये च[11] ग्रासयोगे सुरेश्वरि ॥ ५२ ॥
ग्रासेन तु तृतीयेन[12] काकविष्ठासमो भवेत्[13] ।
ग्रासेन तु चतुर्थेन दधिमण्डसमो भवेत् ॥ ५३ ॥
पञ्चमे चार्पिते ग्रासे नवनीतसमो[14] भवेत् ।
षष्ठे तु गोलकाकारः[15] क्रमाज्जीर्णस्य लक्षणम् ॥ ५४ ॥
काञ्जिकेन निषिक्तेन रक्तव्योम यतस्रुतम्[16] ।

---

(1) K reads पूर्वाभिषेक, which is incorrect (2) चतुष्षष्ट्यंशक पूर्वा an incorrect variant in K. (3) द्वात्रिंशांश द्वितीयक a variant in K. (4) तृतीय षोडशांशक a variant in K. (5) चतुर्थोऽष्टांशक च, a variant in K which is inc. (6) पञ्चमोपि चतुर्थांशौ, a variant in K. (7) षष्ठो विह्यप्रकीर्त्तित, a variant in M (8) K reads ग्रासा रसस्य दातव्या. M reads ग्रासो रसस्य दातव्य, wherein the last term is inc. (9) K has ससत्त्वाभ्रकस्य वा (10) K reads चतुष्षष्ट्यंशत M reads चतुष्षष्ट्यंशक Both are inc (11) जलूकावद्द्वितीये तु, a variant in M. (12) M reads तृतीयस्य (13) तेन काकविष्ठा भवेत् a variant in M. (14) K reads नवनीत समा which is not correct (15) K reads गोलकाकार. (16) K reads रक्त व्योमम्, which is inc. तेन भाव is the reading in M.

खल्लान्तधारयेत्तत्र[1] शुक्लवासनया[2] सह ॥ ५५ ॥
हेम तारञ्च संघृष्य[3] खल्ले तत्र रसं न्यसेत्[4] ।
काञ्जीसहितकाशीसं[5] सिन्धुना चरते रसः ॥ ५६ ॥
हेम सोसन्तु संघृष्य[6] रसं तत्र प्रदापयेत् ।
नागहेमयुतं व्योम समजीर्णं द्रुतं[7] भवेत् ।
अभ्रकोपरसान्[8] क्षिप्रं सुखेनैव चरत्ययम् ॥ ५७ ॥
तारं वङ्गं च संघृष्य[9] रसं तत्र प्रदापयेत् ।
नागहेमयुतं व्योम समजीर्णं द्रुतं भवेत् ।[10]
सुखेन चरते व्योम तारकर्म्मणि शस्यते[11] ॥ ५८ ॥
समुखं निर्मुखं[12] वापि यत्नतश्चारयेत्क्रमः[13] ॥ ५९ ॥
चारणां विविधामेवं[14] कृत्वा गर्भद्रुतिं रसे ।
चारयेत् स्वेदयेत् पिष्ट्वा[15] परिणामक्रमैस्त्रिभिः[16] ॥ ६० ॥
कट्वम्ल[17]क्षारगोमूत्र-सुह्योक्षीरैः प्रलेपितम्[18] ।

---

(1) खल्ले तु चालयेत्तत्र, a variant in K. (2) K reads पुच्छ वासनया. M reads वासनाया, which is inc. (3) K reads सङ्घाष्य. (4) खल्ले तत्र च संन्यसेत्, a variant in K. (5) कांचीसहितकाशीस, a variant in M. (6) K reads सङ्घष्य. (7) M has समजीर्णद्रुत (8) M reads अभ्रकोत्थरसान्. (9) K reads सङ्घष्य. M reads संघृष्य. (10) This hemistich is not found in K. (11) K reads सुमुख (12) निर्मुखं संमुख is the reading in K. सम्मुख निर्मुख is the reading in M. (13) K reads तत', which is not accurate. (14) M reads चारणां विविधामेव. (15) K reads incompletely—चारयेत् पिष्टे. (16) M reads incompletely—परिक्रमैस्त्रिभि. (17) M reads पटूम (18) सुहि-क्षीरै प्रलेपित, a variant in M.

पूर्वाभिषेक[1]योगेन गर्भे द्रवति मर्दनात् ॥ ४९ ॥
चतुःषष्ट्यंशकः पूर्व्वः[2] द्वात्रिंशांशो द्वितीयकः[3] ।
तृतीयः षोडशांशस्तु[4] चतुर्थोऽष्टांश एव च[5] ॥ ५० ॥
पञ्चमस्तु चतुर्थांशः[6] षष्ठो द्व्यंशः प्रकीर्त्तितः[7] ।
ग्रासो रसस्य दातव्यः[8] ससत्त्वस्याभ्रकस्य च[9] ॥ ५१ ॥
चतुःषष्ट्यंशके[10] ग्रासे दण्डधारी भवेद्रसः ।
जलौकावद्द्वितीये च[11] ग्रासयोगे सुरेश्वरि ॥ ५२ ॥
ग्रासेन तु तृतीयेन[12] काकविष्ठासमो भवेत्[13] ।
ग्रासेन तु चतुर्थेन दधिमण्डसमो भवेत् ॥ ५३ ॥
पञ्चमे चार्पिते ग्रासे नवनीतसमो[14] भवेत् ।
षष्ठे तु गोलकाकारः[15] क्रमाज्जीर्णस्य लक्षणम् ॥ ५४ ॥
काञ्जिकेन निषिक्तेन रक्तव्योम शतप्लुतम्[16] ।

---

(1) K reads पूर्वाभिषिक, which is incorrect (2) चतुष्षष्ट्यंशक पूर्वं, an incorrect variant in K (3) द्वात्रिंशांश द्वितीयक, a variant in K. (4) तृतीय षोडशांशेन a variant in K. (5) चतुर्थोऽष्टांशमेव च, a variant in K which is inc. (6) पञ्चमोपि चतुर्थांशो, a variant in K. (7) षष्ठो द्विगुणप्रकीर्त्तित, a variant in M (8) K reads ग्रासो रसस्य दातव्या. M reads ग्रासो रसस्य दातव्य, wherein the last term is inc. (9) K has सत्वस्याभ्रकजस्य वा (10) K reads चतुष्षष्ट्यंशतो. M reads चतुष्षष्ट्यंशता Both are inc. (11) जलूकवद्द्वितीये तु, a variant in M. (12) M reads तृतीयस्य (13) यत्र काकविष्ठा भवत्, a variant in M. (14) K reads नवनीत समो, which is not correct (15) K reads गोलकाकार. (16) K reads रक्त व्योमम, which is inc. हैम व्योम is the reading in M.

खल्लान्तधारयेत्तच्च[1] शुल्ववासनया[2] सह ॥ ५५ ॥
हेम तारञ्च सङ्घृष्य[3] खल्ले तत्र रस न्यसेत्[4] ।
काञ्जीसहितकाशीसं[5] सिन्धुना चरते रसः ॥ ५६ ॥
हेम सोसन्तु संघृष्य[6] रस तत्र प्रदापयेत् ।
नागहेमयुत व्योम समजीर्णं द्रुतं[7] भवेत् ।
अभ्रकोपरसान्[8] क्षिप्रं मुखेनैव चरत्ययम् ॥ ५७ ॥
तारं वङ्गं च सङ्घृष्य[9] रसं तत्र प्रदापयेत् ।
नागहेमयुतं व्योम समजीर्णं द्रुतं भवेत् ।[10]
मुखेन चरते व्योम तारकर्म्मणि शस्यते[11] ॥ ५८ ॥
समुख निर्मुख[12] वापि यन्नतथारयेन्नभ.[13] ॥ ५९ ॥
चारणा त्रिविधामेव[14] कृत्वा गर्भद्रुतिं रसे ।
चारयेत् स्वेदयेत् पिण्डं[15] परिणामक्रमैस्त्रिभिः[16] ॥ ६० ॥
कट्वम्ल[17] क्षारगोमूत्र स्नुहीक्षीरैः प्रलेपितम्[18] ।

---

(1) खल्ले तु धारयत्तच, a variant in K. (2) K reads शुल्व वासनया M reads वासनाया, which is inc. (3) K reads सङ्घाप्य (4) खल्ले तत्र च सन्यसेत्, a variant in K. (5) कांजीरहितकाशीस, a variant in M. (6) K reads सङ्घ्य (7) M has समजीर्णद्रुत (8) M reads अभ्रकोत्परसान् (9) K reads सङ्घृष्य M reads संघृष्य. (10) This hemistich is not found in K (11) K reads समुख (12) निर्मुखं हेमुखं is the reading in K. सम्मुख निर्मुख is the reading in M (13) K reads सत्, which is not accurate. (14) M reads चारणां त्रिविधामेव. (15) K reads incompletely—चारयत् पिण्डं (16) M reads incompletely—परिक्रमैस्त्रिभि'. *(17) M reads* पटुम्ल *(18)* स्नुहि-क्षीरे प्रलेपित a variant in M.

पश्चिप·घट्टं वस्त्रेण[1] भूयो ग्रासं निवेदितम्[2]।
चारारनाम्लसैन्धेषु स्वेदयेन्मृदुनाग्निना ॥ ६१ ॥
क्रमेणानेन देवेशि जायते दिवसैस्त्रिभिः[3] ।
यन्त्रादुद्धृतमात्रं तु[4] लोहपात्रे स्थितं रसम्[5] ॥ ६२ ॥
साम्लेन[6] काञ्जिकेनादौ चान्वितं वस्त्रगालितम् ।
पात्रे सुखोष्ण[7] हस्तेन यावत् शेषं विमर्दयेत् ॥ ६३ ॥
चतुर्गुणेन वस्त्रेण पीडितो निर्मलश्च सः[8] ॥ ६४ ॥
गालनक्रियया ग्रासे सति निक्षेपनिर्गते[9] ।
स[10] भवेद्दण्डधारो च जीर्णग्रासस्तथा रसः[11] ॥ ६५ ॥
अजीर्णे पाचयेत् पिष्टीं[12] स्वेदयेन्मर्दयेत्तथा ।
वासवाम्ल[13]प्रयोगेण जीर्णे ग्रासं तु दापयेत्[14] ॥ ६६ ॥
इष्टिकागुडदुग्धोर्णा[15]-राजीसैन्धवधूमजैः[16] ।

---

(1) K has वद्दवस्त्रेण M has वस्त्रे वस्त्रेण (2) भूर्जं चार निरीक्ष्यताम्- a variant in M (3) M has वा त्रिभिस्त्रिभिः (4) M reads मात्रे तु (5) M has रस, which is gram inc. (6) M reads सोप्येन, which is perhaps काप्येन (7) M has सुखोष्णे (8) विडतो निमल रस, a variant in M, wherein the second term is inc (9) सति विशेषनिर्गते, a variant in K (10) M reads न, which is an error of the scribe (11) We do not find तथा रस: in K. (12) K reads त्याजयेत् पिष्टौं M reads पिष्ट (13) K has वासमात्म (14) M reads तापयेत् (15) B reads दुग्धार्णं M reads इष्टकागुडदिग्धोर्णं, (16) M reads धूमकै

षोडशांशे स धान्याभ्रे[1] मर्द्य स्वेद्यश्च पारद[2] ॥ ६७ ॥
निर्म्मलीकरणार्थं तु[3] ग्रासे ग्रासे[4] पुन पुन ।
जीर्णाभ्रो जीर्णबीजोऽपि रागान् गृह्णाति[5] निर्मल ॥६८॥
क्रमेणानेन दोलाया[6] चार्य्य[7] ग्रासचतुष्टयम् ।
तत कच्छपयन्त्रेण ज्वालन बन्धन[8] क्रमात् ॥ ६९ ॥
ऊर्द्धाधश्चाष्टमांशेन विड् दत्वापि जारयेत्[9] ।
समजीर्णाभ्रक सूत शतवधी[10] भवेत् प्रिये ॥ ७० ॥
सहस्रवेधी द्विगुणे त्रिगुणेऽयुतवधक ।
चतुर्गुणे लक्षवेधी स भवेद्भूचरी रस ॥ ७१ ॥
जीर्णे पञ्चगुणे[11] देवि ब्रह्मायुर्जायते रस[12] ।
आयुसु[13] षडगुणे[14] विष्णो कोटिवेधी भवेद्रस ॥ ७२ ॥
रसस्य सर्व्वदोषास्तु[15] षडगुणेनाभ्रकेन तु[16] ।

---

(1) B has an incomplete charana षोडशांशे स ध स्रे M has षोडश शे श्च य स्रे (2) B reads स पारद K reads स्वद्य which is incorrect (3) K reads करणार्थे तु (4) The second ग्रासे is omitted in B (5) रागानाश्नाति is the variant in B नागादग्रह्णाति is the variant in M (6) M reads डोलायां (7) B reads चार्थे K reads वार्य Both are inc (8) B has ज्वालन वर्द्धन which is inc M has मदन (9) B reads तथापि instead of दत्वापि दिष्टो दत्वापि जीर्यते a variant in K दत्वा विचारयत् a reading in M (10) B reads शतवेधि which is inc (11) M reads पञ्चगुण which is not correct (12) B and M read भेर (13) B reads आयुश्च (14) K reads षट्गुणे M reads षडगुणो (15) M has सर्व्वदोषांस्तु which seems to be incorrect (16) K reads षट्गुणेन M reads षडगुणनाधकस्य तु

जीर्णेन नाशमायान्ति[1] नात्र कार्य्या विचारणा ॥ ७३ ॥
रसराजे[2] यदा जीर्णे[3] षड्गुणं गगनं[4] प्रिये ।
तदा[5] ग्रसति लोहानि त्यजेच्च मतिमात्मनः[6] ॥ ७४ ॥
धूमचिटिचिटिश्चैव[7] मण्डूकप्लुतिरेव च[8] ।
सकम्पश्च विकम्पश्च[9] पञ्चावस्था रसस्य तु ॥ ७५ ॥
कपिलोऽथ निरुद्गारि[10] विप्रुषश्चैव मुञ्चति[11] ।
अग्नौ तिष्ठति[12] निष्कम्पो व्योमजीर्णस्य लक्षणम् ॥ ७६ ॥
समजीर्णे भवेद्बालो[13] यौवनस्थ[14]श्चतुर्गुणम् ।
वृद्धस्तु षड्गुणं जीर्णे[15] कुर्य्यात्[16] कर्म पृथक् पृथक् ॥७७॥

---

(1) K has जीर्णे जीर्णे समायाति M has जीर्णेन नाशका याति The sense of these readings is not clear (2) B reads रसराजो (3) K reads जीर्णे M reads यदा जीर्णं (4) M has गगन षड्गुण (5) B has यदा which is inc (6) Both B and K read मतिमात्मर, which has no clear sense (7) धूम चिटि चिटिश्चैव, a variant in K (8) मिण्डकप्लुतिरेव च a variant in B K has मण्डकप्लुतिमेव च Both the readings seem to be inc (9) K reads सकप च विकप च (10) M reads कपिलाश्चनिरुद्गारि (11) B reads विप्रश्चैव In K, the whole hemistich seems to be incorrect which is as follows—कपिल श्चनिपिप्रुशि मैव चप चैव मुञ्चति (12) K reads तिष्ठति which is gram. incorrect (13) समजीर्णो भवेद्बालो an incorrect variant in K (14) B reads यौवनर्थ, which has no sense K reads यौवनस्थ (without विसर्ग), which is gram inc. (15) B has वृद्ध षड्गुणजीर्णेस्तु K has वृद्ध षड्गुण जीर्णस्तु M has वृद्धस्तु षड्गुणो जीर्णे We have adopted the above reading after collating all the texts. (16) Both B and K read तत्र

बालस्तु पत्रलेपेन कल्कयोगेन यौवन.[1] ।
वृद्धो[2] विध्यति लोहानि जारितः सारितोऽथवा ॥ ७८ ॥
कुमारस्तु रसो देवि न समर्थो रसायने ।
यौवनस्थो रसो[3] देवि क्षमो देहस्य रक्षणे ॥ ७९ ॥
जरावस्थो रसो यश्च देहे लोहेन सङ्क्रमेत्[4] ।
अभावेऽभ्रकसत्त्वस्य[5] कान्तसत्त्वं प्रदापयेत् ॥ ८० ॥
कान्तस्य चाप्यभावे[6] तु तीक्ष्णलोहन्तु दापयेत् ।
अनेन क्रमयोगेन सर्व्वसत्त्वानि जारयेत्[7] ॥ ८१ ॥
एकोऽपि हेमसयुक्तश्चामीकरकर. क्षणात् ।
गन्धकात् परतो नास्ति रसेपूपरसेषु वा[8] ॥ ८२ ॥
पूर्व्वोक्तसत्त्वयोगेन[9] द्विरष्टगुणगन्धकम्[10] ।
अथवा द्वादशगुणं षड्गुणं[11] वापि जारयेत्[12] ॥ ८३ ॥
माक्षिक[13] सत्त्वमादाय पादांशेन तु[14] जारयेत् ।
ततोऽपि सर्व्वसत्त्वानि द्रावयेत् सूतगर्भतः ॥ ८४ ॥

---

(1) M reads यौवन, which is incorrect [Here अर्शआदित्वात् अच्]
(2) K reads वृद्धो which is incorrect  (3) K reads यौवनस्थरसो
(4) K reads सङ्क्रमे which is an error of the scribe M reads देहलाहेच.
(5) अभावे अभ्रसत्त्व, a reading in M  (6) K reads चाप्यभावे.
(7) M reads रञ्जयेत्  (8) K reads च. From this hemistich, some portion is wanting in B  (9) M has पूर्वोक्तयोगयन्त्रेण.
(10) K reads द्विरष्टगुण गन्धक, which is incomplete  (11) K has षड्गुणं  (12) M has वा विजारयेत्  (13) M reads माक्षिक
(14) तु is wanting in K.

हेमपावकयो सख्य तथा[1] काञ्चनसूतयो ।
वङ्गिसूतकयोर्वैर तयोर्मित्रेण मित्रता[2] ॥ ८५ ॥
अग्निको[3] यवचिश्वा च खणुभट्टश्च रागिणी[4] ।
दोलास्वेदेन[5] तत् पक्व हेमजारणमुत्तमम् ॥ ८६ ॥
पलाशभस्मापामार्गो[6] यवक्षारश्च काञ्जिकम्[7] ।
सौवर्चलं च कासीस[8] सामुद्र सैन्धव तथा ॥ ८७ ॥
आसुरी टङ्कणश्चैव[9] नवसार[10]स्तथैव च ।
कर्पूरश्चैव माक्षीक[11] समभागानि कारयेत् ॥ ८८ ॥
स्नुह्यकदुग्धैर्देवेशि[12] मूषा[13]लेपन्तु कारयेत् ।
विडचूर्णं ततो दत्वा क्रमश जारयेत् प्रिये ॥ ८९ ॥
शृणु देवि प्रवक्ष्यामि भूचराख्यन्तु[14] जारणम् ॥ ९० ॥

---

(1) M reads सूत which creates a tautology (2) तयमित्रेण मित्रता a variant in M (3) K reads चंक्रोल (4) K reads completely—खुमटेन मागिनी The meaning of खणुभट्ट is unintelligible (5) M reads दोल स्वेदन (6) K reads पत्र मं which seems to be incorrect (7) M reads काञ्चिकम (8) K read कौशीस which is an error of the scribe M reads कासीस (9) K has आ[illegible]री टङ्कण चैव which is incomplete (10) M reads [illegible] (11) कपर चैव माक्षिक a variant in K (12) K reads [illegible]दुग्ध ईशेशि which appears to be inc. M reads [illegible]दुग्ध which is not also accurate here. (13) K reads मूषा which is inc. (14) K has भूचराख्यम् M has भूचराख्यन्तु Both seem to be inc since we see afterwards (in śloka 98) भूचरी जारणा and not भूचरी or [illegible] जारणा

क्षणं पीतं[1] तथा रक्तं[2] शुल्वे तीक्ष्णे च मेलयेत् ॥ ८१ ॥
शुल्वे तीक्ष्णं यदा चूर्णं[3] द्वाविंशतिगुणं प्रिये[4] ।
गन्धनागं ततोऽर्द्धं तु[5] क्रमेणैव तु मेलयेत् ॥ ८२ ॥
हेम्ना तु सह दातव्यं सूतकेकेन षोडश[6] ।
गन्धनागं यदा जीर्णं[7] तदा[8] बद्धो[9] भवेद्रसः ।
हेम्नि जीर्णे ततोऽर्द्धेन[10] सूत[11]लोहेन रञ्जयेत् ॥ ८३ ॥
गन्धकेन हतं शुल्वं[12] माक्षिकं दरदायसम् ।
पुटेन मारयेच्छुद्धं हेम दद्यात् तु षड्गुणम्[13] ॥ ८४ ॥
सूतके हेमबीजं च यदा जीर्णं[14] चतुर्गुणम् ।
बद्धरागं विजानीयात् हेमाभो जायते रसः ॥ ८५ ॥
सारणायन्त्रमध्यस्थं तेनैव सह सारयेत्[15] ।
त्रिभाग[16]सारितं कृत्वा पुनस्तत्रैव[17] जारयेत् ॥ ८६ ॥

---

(1) K reads क्षणपीत (2) M reads रक्तगुण (3) यद यदा भवेज्जीर्णे, a variant in K, after this, one charana is wanting in it. (4) K reads द्वाविंशतिगुण चैव न सारसवैव च, which is incomplete. (5) M reads ततोर्ध्वे तु, which is unintelligible (6) सूतके चैव षोडश, a reading in K. (7) M reads यथा चूर्णे (8) M reads तथा. (9) K reads बद्धो, which seems to be incorrect. (10) K has an incomplete charana—हेमजीर्णे ता॰ ॰न. (11) M has सूता, which is inc. (12) K reads सुल्व (13) हेम दद्यात् षड्गुण, an incomplete variant in K. (14) K reads यदार्णं, which is an error of the scribe. M reads यथा जीर्णे (15) M reads कारयेत्. (16) M reads त्रिभाग. (17) K reads पुनस्तेनैव.

जारित सारितश्चैव पुनर्जारितसारितः[1] ।
सप्तशृङ्खलिका[2]योगात् कोटिवेधो[3] भवेद्रसः ॥ ९७ ॥
भूचरी जारणा प्रोक्ता— खेचरी[4] जारणा शृणु ॥ ९८ ॥
क्षोरमुख्यानि रत्नानि[5] रसोच्छिष्टानि कारयेत् ।
कटुतुम्बस्य बीजानि तस्यार्धेन[6] तु दापयेत् ॥ ९९ ॥
महाजारसमायुक्त[7] कल्कं कुर्याद्विचक्षणः ।
वज्रमूषामुखे[8] चैव तन्मध्ये स्थापयेद्रसम् ॥ १०० ॥
कनकं कनकं चैव[9]-मेकीकृत्य[10] च मर्दयेत् ।
पद्मरागप्रलेपेन[11] रसे रसं तु दापयेत्[12] ॥ १०१ ॥
एकादशगुणं यावत् पद्मरागं तु सूतके ।
रागजीर्णस्तु[13] देवेशि लिङ्गाकारो भवेद्रसः ॥ १०२ ॥
रक्षितव्यः[14] प्रयत्नेन लोकपालाष्टकेन च[15] ।

---

(1) K has an incomplete charaṇa पुनर्जारित (2) K reads शृङ्खलिका (3) K has an incorrect reading—कोटिवेधि (4) K reads खचरी. (5) K has an incomplete charaṇa—क्षीररागानि M has क्षीरमुख्यानि, which seems to be an error of the scribe (6) M reads तस्योर्ध्वेन (7) K reads महाजारसयक्त, which seems to be महाजारसयुक्त. (8) K has वज्रमूख खे M has वज्रमूषामुखे Both are inc. (9) K reads कनक कनक च, which is incomplete as well as tautological (10) M reads मिलीकृत्य which is not grammatical. (11) K has पद्मराग प्रयत्नेन (12) K reads कारयेत् M reads रसो in lieu of रसे (13) M reads रागचूर्णम् (14) K reads रंजितव्यं (15) K has three letters only of this charaṇa—
ना या डु

षड्भागं सूतकेन्द्रस्य तेषु सर्व्वेषु दापयेत् ॥ १०३ ॥
भक्षितव्यं प्रयत्नेन[1] नत्वा च गुरुदेवयोः ।
सर्व्वसिद्धान्नमस्कृत्य देवताश्च विशेषतः ॥ १०४ ॥
मूर्च्छाङ्गदाहश्च[2] ततो जायते[3] नात्र संशयः ।
आत्मानमुत्थितं पश्येत् दिव्यतेजो[4]महाबलम् ॥ १०५ ॥
शङ्खकाहल[5]निर्घोषैः सिद्धविद्याधरैः सह ।
इच्छया विचरेल्लोकान् कामरूपो[6] विमानगः ॥ १०६ ॥
देवाश्च[7] यत्र लीयन्ते सिद्धस्तत्रैव लीयते ॥ १०७ ॥
पुनरन्यं प्रवक्ष्यामि जारणा[8]योगमुत्तमम् ॥ १०८ ॥
*सुदृढं पाचितं[9] सूतं सर्व्वदोषोज्झितं ततः*[10] ।
शाकपल्लवसारेण विष्णुक्रान्ता[11]रसेन च ॥ १०९ ॥
पलाश[12]पुष्पतोयेन भावितं गन्धकं समम् ।
समं[13] कृष्णाभ्रसत्त्वञ्च रसकञ्चाष्टकं गुणम् ॥ ११० ॥
तीक्ष्णशुल्वारश्चैव कूर्मयन्त्रेण जारयेत् ।

---

(1) After this we find two redundant charanas in K, which are as follow—रसे ग्रास तु दापयेत् । रक्षितव्य प्रयत्नेन (2) मूर्च्छांगदाह च, an incorrect reading in K. मूर्च्छादाहश्च, an incomplete reading in M. (3) K reads जायते, which is gram. inc. (4) M reads incorrectly दिव्यतोजो (5) K reads सखकाहल, which appears to be incorrect. (6) K reads कामरूपो (7) K reads देवा वै. (8) K reads जारण (9) K has सुदृढ पाचित (10) This charana is wanting in K (11) M reads विष्णुक्रान्त (12) K reads पालाश (13) K reads सैन्ध.

काञ्चनं जारयेत् पश्चात् विडयोगेन पार्व्वति[1] ॥ १११ ॥
तत सिद्ध[2] विजानीयात् देध[3] शुल्वस्य दापयेत् ।
कर्म्मसंख्याप्रमाणेन नागो भवति काञ्चनम् ॥ ११२ ॥
अत पर प्रवक्ष्यामि जारणाक्रममुत्तमम् ॥ ११३ ॥
वोजचूर्णानि तैलेन भावयित्वा पुन पुन. ।
षोडशांशेन तद्ग्रास[4]मङ्गुल्या मर्दयेच्छनैः ॥ ११४ ॥
आर्द्रकादि ततो योगाद्[5]-दातव्य षोडशांशत[6] ।
भूर्जे[7] दत्त्वा ततो देय दोलायन्त्रे[8] विनिक्षिपेत् ॥ ११५ ॥
अहोरात्रेण तद्बीज सूतको ग्रसति[9] प्रिये ।
तमुद्धृत्य[10] रस देवि खल्ले[11] समर्दयेत्ततः ॥ ११६ ॥
ततो यन्त्रे विनिक्षिप्य दिवारात्र विडाग्निना[12] ।
तम समुद्धृत[13] यन्त्रात् तप्तखल्ले[14] विमर्दयेत् ॥ ११७ ॥
मर्दयित्वाभ्रके[15] पिण्डे क्षिप्त्वा तच पुट ददेत् ।
ततो गर्भे पतत्याशु जारयेत् तत्[16] सुखेन तु ॥ ११८ ॥

(1) K reads पार्व्वती which is not gram correct (2) K reads सत्व. (3) K reads द्वन्द (4) K reads त ग्रास (5) K has योग. (6) K has षाडश तत (7) K reads भूर्ये (8) M reads दोलायन्त्रे (9) सूतके ग्रसते is the reading in K, which is gram. incorrect (10) K reads तमुद्धृत्य, which is not gram. correct. (11) All the MSS spell खल्ल which is not corroborated by any lexicon (12) K reads दीप्ताग्निना, which mars the metre. (13) M reads समुद्दित (14) K has तदा खल्ले (15) K reads मर्दयित्वा १६. (16) This is wanting in K.

दोलायन्त्रे ततो दत्त्वा[1] आर्द्रपिण्डे नपुंसकम्[2] ।
याहयेद्[3]दिवसे सूतो जरते ग्रसते ततः[4] ॥ ११९ ॥
समजीर्णं ततो यावत् दोलायन्त्रविचक्षणः[5] ।
पश्चात् कच्छपयन्त्रेण समजीर्णं[6] तु पार्व्वति ।
तं ग्रासद्वादशांशेन[7] कच्छपेन तु जारयेत् ॥ १२० ॥
यावदार्द्रक[8]योगं च गर्भद्रावणमेव च ।
पश्चात्त[9] देवि निक्षिप्य पुटं दद्याद्विचक्षणः ॥ १२१ ॥
अष्टांशेन ततो ग्रासं गर्भद्रावश्च पूर्व्ववत्[10] ।
कन्दोदरे[11] सूरणस्य तं विनिक्षिप्य सूतकम् ।
पुटेन्तु जारितस्तावत्[12] यावत् कन्दो न दह्यते[13] ॥ १२२ ॥
पादांशेन तु मूषाया[14] ग्रासः सूते[15] विधीयते ।
पूर्व्ववच्च विड़ं दद्यात् गर्भद्रावणमेव च ॥ १२३ ॥
एवं[16] चतुर्गुणे जीर्णे सूतको बलवान् भवेत् ।

---

(1) K reads दत्वा, which is inc M reads डोलायन्त्रे (2) This charana is wanting in M (3) K has ग्रहीय. (4) जारते ग्रसते रस, a variant in K (5) दोलायन्त्रेष विचक्षण, a reading in K. M reads डोलायन्त्र (6) K has an incomplete reading—सजीर्ण (7) K reads ग्रास द्वादशांशेन (8) M reads प्रासादार्द्रक, which is not intelligible (9) K reads यथाभ. M reads पश्चन्त. Both are unintelligible (10) M reads पूर्वकम् (11) M reads कन्दोदरे (12) पुटयवारितस्तावत्, a variant in M (13) यावत् कदो न घ्नत्, an incorrect variant in K (14) मूषायां is the reading in K. (15) M reads सूता (16) K reads पश्चे

ततः शलाकया ग्रासान्[1] अग्निस्थो ग्रसते रसः[2] ॥ १२४

ततो रत्नानि जार्य्याणि[3] वक्ष्यमाण[4]क्रमेण तु ॥ १२५

अभ्रकं भ्रामकञ्चैव[5] शंखनाभिं[6] तथैव च ।

रसानुपरसान् दत्त्वा[7] महाजारसमन्वितान्[8] ॥ १२६ ॥

वज्रकन्दं वज्रलता[9] मेषशृङ्गमृतायसम्[10] ।

कटुतुम्बस्य बीजानि मृतलोहानि पाचयेत्[11] ॥ १२७ ॥

सर्व्वाणि समभागानि शिखिशोणितमाचितम्[12] ।

तावत्तं मर्दयेत् प्राज्ञो यावत् कर्म्म दृढं भवेत् ॥ १२८ ॥

मूषा वज्राकृतिश्चैव[13] कर्त्तव्या छादनैः सह ।

तन्मध्ये स्थापयेत् सूतम् अधोवातेन धामयेत्[14] ॥ १२९ ॥

आदौ तथैव दातव्य[15] वज्रमोषधलेपितम्[16] ।

गृह्णाति कोऽपि[17] सन्देहो यथा तीव्रे हुताशने[18] ॥ १३० ॥

---

(1) K reads ग्रासम् (2) This charana is wanting in M (3) K reads जार्याणि, which is gram incorrect, the word जार्य being an indeclinable (4) K has वक्ष्याण (5) K reads भ्रामकञ्चैव. (6) M reads शुखनाभि (7) K has रसानुपरसा दत्त्वा M has रसोपरसान्दत्वा. (8) K has महाजारसमन्वितम् M has महाजारसमन्वितम् (9) कटुतुम्बा मज्ञा, an incomplete variant in K (10) K reads मृतायस, which seems to be an error of the scribe. (11) M reads पेषयेत् (12) शिखिशोणितसमन्वित, a variant in K. (13) मूषा वज्राकृतीरैव, a variant in K मूषामध्याकृतिश्चैव, a variant in M (14) M reads [illegible] (15) K has [illegible] (16) K reads [illegible] (17) K reads कोप (18) यथापूर्व हुत कर, a variant in K.

कुलिशेन पुटे दग्धे[1] कर्षयेत्[2] तेन मर्दयेत् ।
यावदेकादशगुणं कुलिशं[3] जारयेत् पुनः ॥ १३१ ॥
सुदग्धशंखनाभिश्च[4] मातुलुङ्गरसप्लुतः[5] ।
मुक्ताफलं[6] ततो देयं वज्रजीर्णे तु सूतके[7] ॥ १३२ ॥
अनेन क्रमयोगेन ह्येकादशगुणं[8] भवेत् ।
केवलं शिखिपित्तश्च[9] नीली[10]निर्य्यासमिश्रितम् ॥ १३३ ॥
नीलोत्पलानि[11] लिप्तानि प्रक्षिप्तानि तु सूतके[12] ।
रसे कल्येन्महारागान् हीनरागान् परित्यजेत्[13] ॥ १३४ ॥
रक्तानि शिखिपित्तश्च[14] महार्त्त[15]समन्वितम् ।
सद्रवं[16] लेपयेत्तेन प्रद्रवेत्[17] रसमध्यत ॥ १३५ ॥
रजनीं चैव कुष्ठं च[18] भ्रह्मनिर्य्यासभावितम् ।
जारण पुष्परागस्य तेनैव सह दापयेत् ॥ १३६ ॥

---

(1) कुलसारिपुटे दग्धे, a variant in K कुलिशनिपुटैर्दग्धे, a variant in M (2) K reads कर्षयेत्. (3) K reads कुलीशं (4) K has नाभिस्तु M has सुदग्ध शखनाभिश्च (5) M reads रसप्लुतम् (6) M has मुक्तापल (7) वर्जसूते सुजीर्णके, a variant in K (8) K reads एकादशगुण (9) M reads पित्त तु (10) K has निलि M has नीलि (11) K reads निलिमथानि, which is unintelligible (12) K reads भूतले (13) In lieu of this hemistich, K has अनेन क्रमय गेन एकादशगुण भवेत्. (14) K has an incomplete charana रक्ता शिखिपित्त च. (15) K reads महारत्न, which seems to be incorrect. (16) K has सरक्त (without any suffix) (17) प्रलिपत् is the reading in K. (18) रजनी चैव क्रमुकी, a variant in M

वज्रुरत्नेषु[1] जीर्णेषु भङ्गरागेषु[2] सुव्रते ।
रसेन्द्रो दृश्यते देवि नीलपीतारुणच्छविः ॥ १३७ ॥
शुद्धानि हेमपत्राणि ग्रासाग्रेण तु लेपयेत्[3] ।
पुटेन मारयेदेतदिन्द्रगोपनिभं[4] भवेत् ॥ १३८ ॥
संसर्गादेधयेत्सर्व्वमिदं हेम मृतं[5] प्रिये ।
त्रिभागं सूतकेन्द्रस्य तेनैव सह सारयेत् ॥ १३९ ॥
मूषामध्यस्थिते[6] तस्मिन् पुनस्तेनैव जारयेत् ।
धूमवेधी भवेद्देवि पुनः सारितजारितः[7] ॥ १४० ॥
अनेन क्रमयोगेन यदि जीर्णा त्रिशृङ्खला[8] ।
वेधयेन्नात्र[9] सन्देहो गिरिपाताल[10]भूतलम् ॥ १४१ ॥
पार्श्वज्योतिः[11] प्रदृश्येत चोर्द्ध्व[12] नैव तु दृश्यते ।
भूचरं न विजानीयात् रसेन्द्र[13] नात्र संशयः ॥ १४२ ॥
तेनाग्रान्तगतिर्देवि[14] योजनानां शतं व्रजेत् ।
दिव्यतेजा[15] महाकायो दिव्यदृष्टि[16]र्महाबलः ॥ १४३ ॥

---

(1) K reads वज्रवेषु (2) K reads भङ्गराजेषु (3) ग्रासा श्रेणानुलेपयन्, an incorrect variant in K (4) K reads नीभ, which is unusual (5) मद हेम त is an incomplete reading in K (6) K has मूखामध्य स्थिते (7) पुन सारितसारित, a variant in M (8) K reads त्रिसकला (9) वेधयेनात्र is an incorrect reading in K (10) K reads पाषाण M reads भूतल which is gram inc (11) K has an incomplete reading पा ज्य ति (12) K reads ऊर्ध्व (13) M reads रसेन्द्रो which is inc. (14) K reads गति दवि M reads तेनाग्रागतिर्देव. (15) K has दिव्यतेजो (16) K reads दिव्या दृष्टि

सर्व्वरोगविनिर्मुक्तो जीवेदाचन्द्रतारकम्[1] ।
तस्य मूत्रपुरीष तु सर्व्वलोहानि विध्यति ॥ १४४ ॥
समजीर्णेन वज्रेण हेम्ना च सहितेन च ।
अग्निस्था जारयेल्लोहान्[2] बन्धमायाति सूतकः ॥ १४५ ॥
सारयत्तेन वोजेन सहस्रमपि[3] वेधयेत् ।
सारितं जारयेत्[4] पश्चात् लेप्यं चेप्यं सहस्रशः[5] ॥ १४६ ॥
सारयेत्[6] तेन वीजेन लचवेधमवाप्नुयात् ।
अनेन क्रमयोगेन कोटिवेधी भवेद्रसः ॥ १४७ ॥
केवलं तु यदा वज्रं समजीर्णं तु जारयेत् ।
बद्ध.[7] सूतस्तदा ज्ञेयो निष्कम्पो निरुपद्रवः ॥ १४८ ॥[8]
अग्निस्थो जायते सूतः शलाका[9] ग्रसते चणात् ।
हठाग्निना धाम्यमानो[10] ग्रसते सर्व्वमादरात्[11] ॥ १४९ ॥
चरते जरते सूत[12] आयुर्द्रव्य[13]प्रदायकः ।

(1) जावेच्चद्रार्कतारक, a variant in K (2) K reads जारयल्लोह. M reads जायते लोहात्. (3) समसमपि is the reading in K (4) K reads जारित (5) लोप्यं चेप्य सहस्रश, a variant in K. लिप्य-क्षिपसहस्रत, a variant in M [For the explanation of लेप्य and चेप्य vide र.र.स Chap VIII v. 80] (6) K reads सासरेत्, which seems to be incorrect M reads धारयेत् (7) B reads बद्ध (without विसर्ग).) (8) This śloka is not found in M (9) M reads शलाका (10) B and M have धाम्यमाने K has हठाग्निधाम्यमानेन None appears to be gram. correct. (11) M has सर्वपारदात् (12) जरते; चरत सूत a variant in B रसते जारते सूते, a variant in K. (13) B reads आयुर्द्रव्य., which is incorrect.

मूषास्थ धमयेत्[1] सूत हठाग्नौ नैव कम्पते[2] ॥ १५० ॥
जारयेत् सर्व्वरत्नानि वज्र[3] खेचरता[4] नयेत् ।
इति[5] लोहेऽष्टगुणिते[6] जीर्णे स्याद्रसबन्धनम् ॥ १५१ ॥
लोहानि सत्त्व त्रिगुण द्विगुण[7] कनक तथा ।
धूमावलोकवेधी[8] स्यात् भवेन्निर्वाणदो रस[9] ॥ १५२ ॥
आदावष्टगुण जार्य व्योमसत्त्व महारसम्[10] ।
सम हेमदशांशेन वज्ररत्नानि जारयेत् ॥ १५३ ॥
सर्व्व[11] च जारयेद्यच्च मदांशो[12] खेचरो रस. ।
भ्रमेत् मदचिणावर्त्त कोटिवेधी च जायते ॥ १५४ ॥
समे तु पन्नगे जीर्णे दशवधी भवेद्रस ।
द्विगुणे शतवधी स्यात् त्रिगुणे तु सहस्रकम्[13] ॥ १५५ ॥
चतुर्गुणेऽयुत[14] देवि क्रमेणानेन[15] वर्द्धयेत् ।

---

(1) K reads धमते M reads धामयत् (2) B has नैव कम्पते M has नावकम्पते (3) M reads वह (4) K reads खचरतां (5) The portion commencing from इति and ending in जारयेत् (153) is not found in K only the following portion is found after भवेद्रस (155) —गुणीता जीर्णे स्याद्रसबंधन लोहसत्त्व त्रिगुण त्रिगुणकनकं तथा १८ धमलोकवधी स्य इवनिर्वाणदो रस । M reads यद in lieu of इति (6) B reads ग्नु ता which is inc (7) M reads त्रिगुण (8) धूमभौदकवधी is the reading in B. (9) B reads वर (10) Two ślokas are wanting in B beginning from this word. (11) K reads सर्व (12) M reads जपमो (13) सहस्र च त्रिगुणे a variant in B सहस्र तु चतुर्गुणे a variant in K (14) K reads चतुर्वाऽयुत (15) K reads incompletely क्रमेणाने वद्धयेत्

उत्तरोत्तरवृद्धा तु[1] जारयेत्[2] तत्र पन्नगम् ॥ १५६ ॥
कुटिल पन्नग जार्य्य तत्र[3] सव्याक्रमेण तु ।
तद्वादमेति देवेशि[4] कोटिवेधी भवेद्रस' ॥ १५७ ॥
कुरुणा दानवेन्द्रेण[5] भक्षितो भस्मसूतक:[6] ।
जारित द्वादशगुण[7] यत्र तोयं सुरेश्वरि ॥ १५८ ॥
भक्षयित्वा[8] पलैक तु दानवो बलदर्पित ।
जगदुत्पाटित[9] तेन कैलासोऽपि च चूर्णित:[10] ॥ १५९ ॥
तत्र मया चक्र ध्यात्वा[11] दृष्ट्वा तन्मायया कृतम्[12] ।
जारित पन्नगे सूत[13] समाश शिलया हृतम्[14] ॥ १६० ॥
तेन सूतेन सलिप्त त्रिशूल हिमशैलजे[15] ।
तेन शूलेन निहतो दानवो बलदर्पित ॥ १६१ ॥

(1) M has उत्तरोत्तरवृद्धाय (2) B reads जायते (3) B reads जायतेऽत्र. (4) तन्नातिमेतु देवेशि a variant in B दत्वा तु देवि is an incomplete variant in K. (5) K reads दानवेनापि M reads कुरिणा दानवेन्द्रेण (6) K reads भस्मपूतक which is evidently the error of the scribe. M reads सूतकम् (7) K has वा दशगुण M has जारितद्वादशगुण (8) M reads रक्षयित्वा (9) B reads जगदुत्पावित. K reads जगदुत्पावित, which is not intelligible (10) कैलास मपि चालित' an incorrect variant in K. (11) तत्र काल, मयातुला, a variant in B तद्वनिकाद्वसमय, a variant in M. Both the readings are unintelligible (12) B reads मद्दृष्ट्वा मायया कृत. K reads हृत. M reads *कृत्वा दृष्टा मायया कृतम्, which mars the metre* (13) K reads पन्नगे मृते. M reads पन्नग मूत (14) M reads सह. (15) B reads रसवे जले K reads शूलपूर्गसि शैलजे M reads रसवज्जलम्

हेम शुल्वं[1] तथा तीक्ष्णं वाजरं च पडालकम्[2]।
रोहणं कान्तलोहं च[3] जारयेत्तत्त्वसंख्यया ॥ १६२ ॥
एकैके[4] रसराजोऽयं बद्धः[5] खेचरतां नयेत्[6]।
गन्धनागे द्रुतिं[7] देवि जारणां सुकरां शृणु[8] ॥ १६३ ॥
आदौ[9] मणोधितं सूतं रजनीचूर्णसंयुतम्[10]।
मर्दयेद्यावदाकृष्णं[11] क्षालयेदुष्णकाञ्जिकैः ॥ १६४ ॥
एवं मुहुर्मुहुर्घृष्टो गन्धनागो द्रुतिं चरेत्[12] ॥ १६५ ॥
नागस्य सूत्र[13] देवेशि वत्सस्य महिषस्य वा[14]।
आवर्त्यावर्त्य भुजगं[15] सप्त वारान् निषेचयेत्[16] ॥ १६६ ॥

---

(1) B reads [illegible] K reads [illegible] (2) [illegible], a variant in B [illegible], a variant in K. [Vide ante 7th Patala, v 107] (3) Both B and M read [illegible] (4) K reads एकैक (without any suffix) (5) M reads बद्ध, which is incorrect. (6) B reads [illegible] which is inc. (7) B has [illegible] K has [illegible]. M has [illegible] (8) [illegible], an incorrect reading in B [illegible], a reading in K, which has no sense. (9) M reads [illegible]. (10) [illegible] a variant in K. [illegible], a variant in M (11) B reads [illegible], which seems to be the error of the scribe. (12) [illegible], a variant in B. [illegible], a variant in K. Both the texts are inc. (13) K reads [illegible], which is not correct. M reads [illegible] (14) M has [illegible] (15) B reads [illegible], which is incorrect. [illegible], a variant in K. (16) B reads [illegible]. K reads [illegible], wherein the last term is incorrect.

छत्वा[1] कण्टकवेध्यानि तस्य पत्राणि सुन्दरि ।
चतुर्थांशप्रमाणेन[2] गन्धकस्य तु योजयेत् ॥ १६७ ॥
प्रसार्य्य लाक्षापटल[3] रोमाणि[4] तदनन्तरम् ।
ऊर्द्ध्वं गन्धकचूर्णं च[5] ततो नागदल तथा[6] ॥ १६८ ॥
गन्धक नरलोमानि लाक्षाया पटल[7] क्रमात् ।
ऊर्द्ध्वं प्रसार्य्य सस्थाप्य[8] सूत्रैर्वर्त्ति[9] तु कारयेत् ॥ १६९ ॥
करञ्जतैल[10]मध्ये तु दशरात्र निधापयेत्[11] ।
दोलाग्रभागा ता वर्त्ति[12] सडशा तु विधारयेत्[13] ॥ १७० ॥
ता द्रुति पातयत् पात्रे सौवीरटङ्कणान्विते[14] ।

---

(1) K reads एव (2) B reads चतुर्थांशप्रमाणेन M reads चतुर्थांशे प्रमाणान Both are incorrect (3) B reads लाक्षापट, which seems to be the error of the scribe (4) B reads रोमाणि which is inc M reads रामाणि, which is also inc. (5) B reads गन्धकचूर्णं च K reads तु M reads ऊर्ध्वं (6) नागादलस्तथ, an incorrect reading in B K reads स्तथा which is inc (7) B has लक्षाया M has पाटल. Both the readings are inc (8) This charana and the next are wanting in K M reads सन्स्थाप्य instead of सस्थाप्य (9) B has सूत्रै र्वर्त्ति (10) K reads कारजतैल (11) K has नियोजयत् M has दशरात्रेण दापयत् (12) B reads वा वर्त्ति K reads दोलमयगता वर्त्ति M reads दौलो दयाया तावत्ति which is unintelligible. (13) तडस्त्र तु विधारयत a variant in B सडस्र तु विधारयेत् a variant in K सस्थाप्य विधारयेत a variant in M (14) सौवीरटिकान्विते, an incomplete reading in B सौवीरधटिकान्विते, a reading in M

मृतवज्रस्य भागैकं भागाः षोडश सूतकम्[1] ॥ ८१ ॥
देवदाली-शंखपुष्पी रसेन मर्दितं[2] क्रमात् ।
मारयेद्[3]भूधरे यन्त्रे भस्मीभवति तत्क्षणात्[4] ॥ ८२ ॥
फूत्काराणां सहस्रेण[5] धाम्यमानो न[6] गच्छति ।
ईदृशं भस्मसूतं च देहे लोहे च योजयेत्[7] ॥ ८३ ॥
तद्भस्मपलमेकं तु[8] पलमेकं तु गन्धकम्[9] ।
अन्धमूषागतं[10] ध्मातं खोटो[11] भवति तत्क्षणात् ॥ ८४ ॥
तं खोटं[12] रञ्जयेत् पश्चात् कापालि[13]क्रमयोगतः ।
सारणात्रययोगेण[14] शब्दवेधं[15] प्रदापयेत् ॥ ८५ ॥
भस्मसूतपलैकं च[16] पलैकं पन्नगस्य च[17] ।

---

(1) D reads सूतकम्, which is an error of the scribe (2) B and M read मर्दितं (3) D and M read मर्दयद् (4) M reads erroneously तत्पणात् (5) K reads फूत्कारणां M reads पुत्कारणां सहस्राणि Both are incorrect. (6) D has धाम्यमानेन. K has धाम्यमानेन. M has धाम्यमानानि (7) देहे च योजये, an incomplete variant in K देहलोहे च वेधयेत्, a variant in M (8) M has तद्‌भस्मपलमेकम्, which is partly incorrect. (9) K reads पलैकं गन्धकस्य च. (10) D reads अन्धं मूषागत, which is incorrect. K reads अन्ध-मूषागत, which is also incorrect. (11) D has खोटी. M has खोटो. (12) M reads तत् खोट (13) K reads कपाली M reads कपाल्ये. (14) सारणाक्रमयोगेन, a variant in M (15) D has शब्द वेध. K has शब्दे वेध. (16) B reads तु. (17) B reads गन्धकस्य च D reads गन्धकस्य च K reads पलैकं च गन्धकं We have adopted the reading in M, since we see afterwards the term पन्नग in all the texts

पुटेन जायते भस्म[1] सिन्दूरारुणसन्निभम्[2] ॥ ८६ ॥

तद्भस्म तु पुनः पश्चाद् गोपित्तेन तु मर्द्दयेत्[3] ।

ताम्रपात्रेण तत्[4] कृत्वा मर्द्दयेल्लोहमुष्टिना ॥ ८७ ॥

मृद्वग्निना ततः पाच्यं यावन्नागेन[5] मेलनम् ॥ ८८ ॥

तद्भस्मभागमेकं तु[6] भागैकं हैमगोलकम् ।

एकीकृत्याथ[7] संमर्द्य क्रामणेन[8] सहैकतः ॥ ८९ ॥

तारारिष्टं तु तेनैव[9] सहस्रांशेन काञ्चनम्[10] ।

अनेन क्रमयोगेण वङ्गभस्म प्रजायते ॥ ९० ॥

सहस्रांशेन तेनैव शुल्ववेधं प्रदापयेत्[11] ।

तच्छुल्वं जायते तारं शंखकुन्देन्दुसन्निभम् ॥ ९१ ॥

श्वेताभ्रकस्य सत्त्वं च[12] कान्ताकान्तौ[13] तथायसम् ।

---

(1) This charana and the next are put in M after the next śloka (2) D reads सिन्दूरारुणसमप्रभम्, which destroys the metre. K read सिंधूरा M reads सिन्दूरारुणसमप्रभम्. (3) This hemistich is placed in M after the next śloka (4) B, K and M read स, which seems to be incorrect. (5) D reads erroneously यावन्नागेन (6) D has an incomplete charana—तद्भस्मभागमेकं तु (7) All the text read एकीकृत्वा, which is grammatically incorrect. (8) M read क्रमणेन (9) D has an incomplete charana—तारिष्टं तु तेनैव K has ताररीष्ट तु तेनैव (10) This charana and the next are not found in K (11) शुल्वं वेध प्रजायते, a variant in D. K reads शुल्वे वेध (12) D has श्वेताभ्रकस्यात्र चाक, which seems to be incorrect. This charana and the next are not found in K. (13) D reads कान्तिक काये, which appears to be incorrect. M reads कान्तिकान्त

वङ्गं तारं तथा श्वेतं[1] वैक्रान्तञ्च कदम्बकम् ॥ ८२ ॥
अन्धमूषागतं[2] ध्मातं खोटं[3] कुन्देन्दुसन्निभम् ।
तं खोटं[4] सूक्ष्मचूर्णं तु द्रुतसूतेन[5] गोलकम् ॥ ८३ ॥
मृतवज्रस्य भागैकं भागाश्चत्वारि[6] गोलकम् ।
मर्दयेत्तप्तखल्वेन[7] भस्मीभवति सूतकः[8] ॥ ८४ ॥
मारयेद्भूधरे यन्त्रे सप्तसंकलिका[9]क्रमात् ।
ततश्च जायते भस्म शङ्खकुन्देन्दुसन्निभम् ॥ ८५ ॥
तद्भस्म पलमेकं तु[10] पलमेकं तु गन्धकम् ।
अन्धमूषागतं[11] ध्मातं खोटो भवति तत्क्षणात्[12] ॥ ८६ ॥
तारेण च समावर्त्य[13] सारणात्रयसारितम्[14] ।

---

(1) वङ्गं तारंश्च श्वेत, a variant in D K and M read श्वेत (2) K reads अन्धमूषागतं. (3) B and K read खोटं. M reads बोट Both the readings are incorrect. (4) K reads खोट M reads बोट (5) B reads द्रुत instead of द्रुत D has धुतेनैव च, which is unintelligible K reads मृतसूतेन (6) B and D read भागचत्वारि. M reads भागचत्वारि. None is correct (7) D reads तप्तखल्वेन K reads तप्तखल्वेन. (8) D reads सूतकम् M reads गोलकम् (9) M reads सप्ति खलिका (10) M reads पलमेकम्, which is incorrect. (11) K reads अन्धमूषागतं, which is not correct (12) खोटं भवति तद्ध्रुवं, a variant in B खोटो भवति तत्क्षणम् a variant in D बोट भवति तत्क्षणात्, a variant in M After the 96th śloka we find the following hemistich in K only—द्रुतेन जायते भस्म शंखकुन्देन्दुसन्निभम् (13) D has तारे च समावर्त्यं. (14) D has सारणात्रयसारितम् which seems to be incorrect.

सहस्रांशेन तेनैव शुल्ववेधं प्रदापयेत् ॥ ९७ ॥
तीक्ष्णसूतपलान्यष्टौ[1] द्रुतसूतपलाष्टकम्[2] ।
मर्द्दयेत्तप्तखल्लेन कुष्ठकुल्ली[3]रसेन च[4] ॥ ९८ ॥
तत्क्षणाज्जायते पिण्ड[5] तीक्ष्णेन सह गोलकम् ।
मर्द्दयेत्तप्तखल्लेन भस्मीभवति तत्क्षणात्[6] ॥ ९९ ॥
मारयेद्भूधरे यन्त्रे सप्तसकलिकाक्रमात्[7] ।
षोडशांशेन तेनैव[8] वङ्गवेध[9] प्रदापयेत् ॥ १०० ॥
तद्भस्मपलमेकन्तु पलैक गन्धकस्य च ।
अन्धमूषागत[10] ध्मात खोटो भवति तत्क्षणात्[11] ॥ १०१ ॥
तस्य खोटस्य[12] भाग च तीक्ष्णचूर्ण च तत्समम्[13] ।
द्वौ भागौ द्रुतसूतस्य[14] सर्व्वमेकत्र मर्द्दयेत् ॥ १०२ ॥

---

(1) Th s charana and the next fifteen are not found in D (2) पलाष्टौ द्रुतसूतक a variant in B K has an incomplete charana—द्रुत सूतक (3) B reads टङ्कचुल्ली K reads कुष्कुलि M reads कुष्टचोली (4) M reads तु (5) K reads पिण्डी (6) M reads erroneously तत्क्षणात् (7) सप्तमि खलिकाक्रमात् a variant in M wherein the m ddle term is incorrect (8) This charana and the next five are not found in B (9) K reads वग वेध M reads वङ्कवेध (10) K reads चक्षमूखागत which is not correct. (11) M reads खोट भवति तत्क्षणात् which is incorrect. After this charana we f nd in K the follow ing hem stich—मारयंदमूधरे यत्र सप्तसकलिकाक्रमात् (12) D reads खोट च M reads खोटस्य (13) तीक्ष्णचर्ण तु सम a variant in D तीक्ष्ण तु तत्सम a variant in K. Both are ncomplete M reads तत्सम wh ch is incorrect (14) Both D and K read सतसूतस्य

तप्तखल्ले तु संमर्द्य[1] गोलको भवति चणात्[2] ।
मारयेद्भूधरे यन्त्रे सप्तसंकलिकाक्रमात्[3] ॥ १०३ ॥
तत् सर्व्वं जायते भस्म[4] शङ्खकुन्देन्दुसन्निभम् ।
तद्भस्म कारयेत् खोटं[5] तीक्ष्णेन द्वन्द्वितं सह ॥ १०४ ॥
अनेन क्रमयोगेण सप्तसंकलिकाक्रमात्[6] ।
तद्भस्म[7] जारयेत् पश्चात् सारणात्रयसारितम्[8] ॥ १०५ ॥
लक्षांशेन तु तेनैव[9] वङ्गवेधं[10] प्रदापयेत् ।
भस्मसूतपलैकं तु[11] शुद्धं वङ्गं प्रलेपयेत्[12] ॥ १०६ ॥
मर्द्दयेदायसे पात्रे वङ्गन्तु म्रियते[13] चणात् ।
द्विपलं मृतवङ्गस्य तारचूर्ण[14]पलद्वयम् ॥ १०७ ॥
द्विपलं[15] गन्धकं दद्यात् पलैकं[16] टङ्कणस्य च ।

---

(1) D has तप्तखल्ले समर्द्य, which is incomplete (2) गोलको भवति तत्क्षणात्, a variant in D, which destroys the metre (3) M reads सप्तत्रि खलिकाक्रमात् which is partly incorrect. (4) This śloka and the next are not found in D (5) K reads वोट. M reads वोद्द (6) M reads त्रि खलिका, which is incorrect. (7) M reads स वोट (8) M reads सारणात्रयसारणात् (9) Both D and K read लक्षांशकेन तेनैव. (10) K reads वङ्गे वेधं M reads वकवेध. (11) भस्मसूत पलैक तु, a variant in D M reads erroneously भस्मसुत. (12) D reads प्रदापयेत् M reads प्रलमन, which seems to be incorrect (13) D reads म्रतये K reads म्रीयते M reads म्रयते All are grammatically incorrect. (14) B reads तारचूर्णं D reads गन्धचूर्णं K reads तारचूर्णं. (15) M reads सपल. (16) M reads त्रिपल

अन्धमूषागत[1] ध्मातं खोटो भवति तत्क्षणात्[2] ॥ १०८ ॥
पलैकं खोटचूर्णस्य[3] पलैकं द्रुतसूतकम्[4] ।
मर्द्दयेन्मातुलुङ्गाम्ले[5] गोलको भवति क्षणात्[6] ॥ १०९ ॥
षोडशांशेन तेनैव शुल्ववेधं[7] प्रदापयेत् ।
वङ्गस्थाने दद्देन्नाग[8] तारस्थाने तु[9] काञ्चनम् ॥ ११० ॥
पूर्व्ववत् क्रमयोगेण[10] रस खोटन्तु[11] कारयेत् ।
त खोट सूक्ष्मचूर्णं तु द्रुतसूतेन[12] गोलकम् ॥ १११ ॥
षोडशांशेन तेनैव ताराविष्ट तु वेधयेत् ॥ ११२ ॥
मृतवङ्गपलैकं तु पलैकं सूतकस्य च[13] ।
सत्त्वचूर्णपलैकं तु त्रयमेकत्र मेलयेत्[14] ॥ ११३ ॥
मर्द्दयेन्मातुलुङ्गाम्ले गोलको भवति क्षणात्[15] ॥ ११४ ॥
मृतवज्रस्य भागैकं भागाश्चत्वारि[16] गोलकम् ।

---

(1) K reads अन्धमूषागत which is incorrect (2) खोटो भवति तत्क्षणात् a variant in M (3) M has खोटचूर्णस्य (4) B reads द्रुतसूतक D and K read मृतसूतकम् (5) M reads erroneously मातुलुङ्गाम्ल (6) खोटी भवति तत्क्षणात् a variant in M (7) D has शुल्ल वेध K has शुल्व वेध (8) D has दद्देन्नाग M has वङ्गस्थाने (9) D has क which is an error of the scribe (10) Both D and M read पूर्वकर्मप्रयोगेण (11) D reads रसखोट M reads रसखोटन्तु (12) Both D and K have मृतसूतेन (13) D reads पलैकं मृतगोलकं K has पलैकं कुंदेन्दुसन्निभ which seems to be absurd (14) This hemistich and the next twelve are not found in D M reads योजयेत् (15) M has गोलो भवति तत्क्षणात् wherein the last term is incorrect (16) M reads भागचत्वारि.

एकत्र मर्दयेत् खल्ले[1] ओषधी[2]द्रवसंयुतम् ॥ ११५ ॥
मारयेद्भूधरे यन्त्रे पुटानां सप्तकेन तु ।
तत् सर्व्वं जायते भस्म वज्रस्यैव[3] प्रभावतः ॥ ११६ ॥[4]
सामुद्रं त्रिफलं[5] देवि भस्ममध्ये[6] प्रदापयेत् ।
एकीकृत्याथ[7] संमर्द्य वज्रीक्षीरे[8] दिनत्रयम् ॥ ११७ ॥
विश्वामित्रकपालस्थं पुटं दद्यात्तु भूधरे ।
तत् सर्व्वं जायते भस्म शङ्खकुन्देन्दुसन्निभम्[9] ॥ ११८ ॥
तेनैव यवमात्रेण वज्रं स्तम्भयति[10] क्षणात् ।

---

(1) M reads मर्द्दे (2) M reads क्षयौ, which is incorrect (3) M has वज्रस्येव, which is incorrect (4) After this we find the following ślokas in K only—

भस्मसूतपलैकं च गन्धकपलद्वय ।
तत्चूर्णं पलैकं तु चयमेकत्र कारयेत् ।
मर्दयेत्यासुलु गान्धैर्गोलिको भवति क्षणात् ।
मृतवज्रस्य भागैकं भागाश्चत्वारि गोलक ।
एकत्र मर्दयेत् खल्ले ओषधीद्रवसंयुत ।
मारयेद्भूधरे यन्त्रे पुटानां सप्तकेन तु ।
तत् सर्वं जायते भस्म वज्रस्येव प्रभावत ।

(5) B reads सामुद्र, which appears to be incorrect K reads त्रिफला (6) M reads भस्ममध्ये, which is incorrect. (7) K has एकीकृत्याथ, M has एकीकृत्वा तु, Both are grammatically incorrect. (8) M reads वज्रीचीर, which is incorrect. (9) K has an incomplete charana—कुन्देन्दुसन्निभ. (10) स्तम्भ भवति is the reading in K which seems to be incorrect M reads वज्र instead of वज्रं

वङ्ग तारं[1] तथा सत्त्व समसूतेन गोलकम् ॥ ११९ ॥
अनेन क्रमयोगेण मारयेच्च पृथक् पृथक्[2] ।
तत् सर्व्वं जायते भस्म वज्रस्यैव[3] प्रभावत ॥ १२० ॥
भस्मसूतपलैक च[4] वङ्ग[5]भस्मपलद्वयम् ।
द्वे पले[6] मृततारस्य सत्त्वभस्मपलद्वयम्[7] ॥ १२१ ॥
शङ्खचूर्णपल पञ्च[8] सामुद्रस्य पलाष्टकम् ।
टङ्कणस्य पलान्यष्टौ[9] सर्व्वमेकत्र मर्द्दयेत् ॥ १२२ ॥
वज्रीक्षीरेण सपेष्य पुट तथाचतुर्दश[10] ।
एष सिद्धरस [11] साक्षात् दुर्लभस्त्रिदशैरपि[12] ॥ १२३ ॥
वङ्ग तु द्रावयेत् पश्चात्[13] भाण्डे चैव तु मृन्मये[14] ।
सिद्ध भस्म भवेल्लोह[15]शलाकेन च चालयेत्[16] ॥ १२४ ॥

---

(1) M reads वङ्गतार (2) M reads erroneously प्रथक प्रथक (3) D reads वज्रस्यैव K reads चेंद्रस्येव (4) D has भस्मसूत पलैकच (5) K wants this charana M reads वङ्ग. (6) K reads द्विपल (7) This hemistich is not found in D. (8) शङ्खचूर्णपलैकाच a variant in M (9) B reads पलाष्ट (10) पुटा मृत्वा चतुर्दश, a variant in D पुट दत्वा चतुर्दश a variant in K पुट दद्यात्तथा दश a variant in M (11) B reads सिद्धिरस (12) दुलभस्त्रिदशैरपि a variant in M (13) D has वङ्ग सुद्रावयित्वापि which is grammatically incorrect. M has an incomplete charana—वङ्गन्द्रावयेत् पश्चात् (14) भाण्डेऽरे चैव तु मृन्मये an incorrect reading in D M reads भाण्डनैव तु मृन्मय, which is incorrect (15) सिद्धभस्म भवेल्लोह a reading in B and M सिद्ध भवायते लौह a reading in D. (16) M has शालकेन तु चारयेत्

धापयेच्च[1] प्रयत्नेन यावत् कठिनता व्रजेत्[2] ।
अन्धमूषागतं धात[3] तार भवति शोभनम् ॥ १२५ ॥
कदाचित् पुटिते तारे[4] पुनर्वङ्गं[5] प्रदापयेत् ।
पवे दाहे कषे च्छेदे[6] तत्तारं शाश्वतं भवेत्[7] ॥ १२६ ॥
स्तम्भित तत्तु गोल च[8] षोडशांश[9]समन्वितम् ।
मृतवज्रस्य[10] भागैक मेकत्रैव तु[11] मर्द्दयेत् ॥ १२७ ॥
देवदाली शङ्खपुष्पी तद्रसेन तु मर्द्दयेत् ।[12]
मारयेद्भूधरे यन्त्रे पुटाना सप्तकेन तु ॥ १२८ ॥
तद्भस्म तु[13] पुनः पश्चात्[14] दीपयन्त्रेण पाचयेत्[15] ॥ १२९ ॥
भस्मसूतपलैकं च[16] श्वेताभ्रकपलद्वयम् ।

---

(1) D *reads* चालयेत्तत् (2) M *reads* व्रजेत्, *which is incorrect.* (3) D has चध मूकागत तार which is incorrect K reads मूखा (4) D reads स्फन्ते तार K reads स्फुन्ते तारे M reads यत् किंचित् पुटिते तारे. (5) D reads erroneously पुनर्नवं (6) यचैदाहकछेदेन, a variant in D पचे दाहकषीच्छदे, a variant in K तव दाहकर्षाच्छेदेन a variant in M. All the texts seem to be incorrect (7) तार शास्वत भवेत, a variant in D M reads शोभन instead of शाश्वतं (8) B reads एतु instead of तत्तु K *reads erroneously* स्तभीत M *reads* चतुर्घोश्च, which has no clear sense (9) Both D and K read षोडशांशि (10) D has मृतवज्रस्य (11) D has एक चैव तु (12) This hemistich is not found in D and M (13) K *reads* तद्भस्तु, *which is grammatically incorrect* (14) After this charana we find the following two charanas in B and K—पुट दद्याच्चतुर्दश । रसोय यवमात्रेण (15) B reads तापयेत् (16) D and K read तु

गन्धचूर्णपलैकं तु[1] पलैकं टङ्कणस्य च ।
एकीकृत्याथ[2] तत् सर्वं वज्रीचीरेण पेषयेत्[3] ॥ १३० ॥
आरण्योत्पलकै[4] पश्चात् पुटं दद्याच्चतुर्दश ।
रसोऽयं यवमात्रेण[5] वङ्गं स्तम्भयति क्षणात्[6] ॥ १३१ ॥
कृष्णाभ्रकपलैकं तु[7] द्वे पले मृतसूतकम्[8] ।
गन्धकस्य पलैकं[9] एकीकृत्याथ[10] मर्दयेत् ॥ १३२ ॥
मर्द्यमानं प्रयत्नेन गोलकं भवति क्षणात् ॥ १३३ ॥
मृतवज्रस्य भागैकं[11] चतुर्भागं च[12] गोलकम् ।
मर्दयेत् प्रहरैकं तु[13] भस्मीभवति सूतकः[14] ॥ १३४ ॥
आरण्यगोमयेनैव[15] पुटं दद्यात्तु[16] भूधरे ।
अनेन क्रमयोगेण सप्तसङ्कलिका[17] कुरु ॥ १३५ ॥

---

(1) D reads पलमं तु which is not correct (2) K and M read एकीकृत्वाथ which is incorrect (3) M reads पीषयेत् (4) D has आरण्योपलकै K has अरण्योत्पलकै (5) D reads पलमात्रेण (6) D reads स्तम्भयते K reads erroneously लभ मर्दयेत् (7) D has कृष्णाभ्रक पलैकं तु This charana and the next two are not found in K (8) B reads द्विपले D reads द्विपलैनैव मृतकम् M wants this charana and the next two (9) D reads पलैकं च (10) B has वज्रीचीरेण (11) D reads भागं च (12) D reads चतुर्भागस्य M reads मृतवज्रस्य (13) B reads तप्तखल्वम D reads प्रहरैकं तु (14) D reads मृतकम् K has स , an incomplete charana (15) D reads अतःप्रैत च तैनैव M reads चरण्य instead of आरण्य (16) D reads दद्याच (17) B reads संकुलिका K reads द्विखलिकं, which is incorrect

शताशेन तु[1] तेनैव नागवेधं[2] प्रदापयेत् ।
तं खोट[3] रञ्जयेत् पश्चात् शुल्वाभ्रककपालिना[4] ॥ १२६ ॥
पुनस्तं रञ्जयेत्[5] पश्चात् तीक्ष्णशुल्वकपालिना[6] ।
पुनस्तं रञ्जयेत् पश्चात् नागाभ्रककपालिना[7] ॥ १२७ ॥
हेम्ना सह समावर्त्य[8] सारणात्रयसारितम्[9] ।
सहस्रांशेन तेनैव शुल्ववेधं प्रदापयेत्[10] ॥ १२८ ॥
जायते कनकं दिव्यं देवाभरणमुत्तमम्[11] ॥ १२९ ॥
वज्रभस्म सुह्वीचीरे[12] पुटितं दशभिः पुटैः[13] ।
तत्तुल्य[14] मर्द्दयेत् सूतं देवदाल्या रसै. पुटेत्[15] ॥ १४० ॥

---

(1) D wants तु K reads च (2) Both D and K reads नाग वल (3) M reads खोट (4) गन्धाभ्रक कपालिक, a variant in D शुद्धाभ्रककपालिना, a variant in K After this cloka we find the following in D only—मृतवज्रस्य भागैक चतुर्भागस्य गोलकम्। मर्द्दयेत् प्रहरैक तु भस्मीभवति सूतकम्, *which seems to be the repitition of the 134th cloka.* (5) D reads पुनस्तद्रञ्जयेत् (6) B reads तीक्ष्णशुल्वाभ्रकपालिना D reads कपालिनाम् (7) This hemistich is not found in D and K (8) D has समावृत्य, which is not proper (9) D has only सारणात्रय सारि, which is an error of the scribe (10) K reads शुल्वे वेध D reads प्रदापयते, which is incorrect (11) B has भूषण D and M have भूषितम् (12) B reads सुह्वीचीर M reads सुह्विचीरं (13) *B and M read पुटेत् D reads वीजित in place of पुटित K reads वेधक* which is incorrect (14) *D has ततुल्य, which is a tautology* (15) B reads हुत

तत्तुल्यञ्च पुटेत्तीक्ष्ण[1] त्रिफलाया रसेन तु[2] ।
तत्तुल्य पुटयेन्नाग[3] महिमाराटरूपकै[4] ॥ १४१ ॥
हेमवर्णप्रद तद्धि[5] विशत्यशेन योजितम्[6] ।
चतु पञ्चशकेनेद[7] शुद्धतारञ्च[8] रञ्जयेत् ॥ १४२ ॥
अष्टमाशेन तेनैव नागपत्राणि लेपयेत् ।
पुटयेन्मारयेन्नाग[9] सिन्दूरारुणसन्निभम[10] ॥ १४३ ॥
तत्तुल्य मारयेद्धेम[11] काञ्चनाररसे पुटेत्[12] ।
तत्तुल्य मारयेच्छुल्व गृहकन्या[13]रसेन च ॥ १४४ ॥
पश्चाद्रक्तेन[14] पुटयेद् यावत् सिन्दूरसन्निभम् ।
चन्द्रार्क रञ्जयेत्तेन[15] शताशेन तु वेधयेत्[16] ॥ १४५ ॥

---

(1) B has तत्तुल्य मर्दयेत्तीक्ष्ण D has तत्कल्य पुटयत्तीक्ष्ण M has तत्तुल्य पुटयत्तीक्ष्ण (2) K reads च (3) D K and M read नाग which is incorrect (4) महिमाराय रूपकै a variant in D महिमायाटरूपकै a variant in K (5) हमवर्णे प्रदत्त तत् a variant in D हमवर्णप्रद सिद्ध a variant in D हमवर्ण प्रद सिद्ध a variant in K (6) D and K read योजयेत् (7) K reads erroneously चतुषष्टाशकेन M reads चतुषष्टाशकेनैव (8) D reads शुद्ध तारञ्च (9) D reads पुटेन्मारयेन्नाग which is incomplete (10) सिन्दूरारुणसमप्रभ a variant in B सिन्दूरमरुणप्रभम् a variant in M (11) M reads मारयेद्धमे which is incorrect (12) B has काचिनारस्य पुटे D has काञ्चनक्षीरसपुटे K has काञ्चनीचीरसंपुटे M has काञ्चनाररसे पुटेत् (13) K and M read गृहकन्या which is not correct (14) K reads यावद्रक्तन M reads पश्चाद्रक्तन (15) चन्द्राकौ रञ्जयेत्तेन an incorrect variant in B (16) D reads योजयेत् M reads वाधितम्

सबीजं बीजवर्जं वा[1] वज्रेण[2] सह सूतकम् ।
तद्भस्म मर्दयेत् पश्चात् स्वर्णपत्ररसेन तु[3] ॥ १४६ ॥
तेनैव वेधयेच्छुल्वं[4] शुल्वं तारे तु योजयेत्[5] ॥ १४७ ॥
वज्रेण द्वन्द्वयेद्धेम[6] हेम्ना च द्वन्द्वयेद्रसम्[7] ।
रसेन द्वन्द्वयेद्देहं[8] स देही ह्यजरामरः[9] ॥ १४८ ॥
कदलीकंदसौवीरं[10] कण्टकारीरसप्लुतम्[11] ।
क्रामणं[12] सर्व्वधातूनां सर्व्वद्वन्द्वेषु[13] मेलनम् ॥ १४९ ॥
तिमिरस्य[14] तु पञ्चाङ्गं मार्जारी[15]बीजसंयुतम् ।
एकीकृत्याथ संमर्द्य वज्रं तेनैव वेधयेत्[16] ॥ १५० ॥

---

(1) B reads बीजवज्र वा D reads विंशाश बीजवज्रेण K reads त्रिंशांश बीजवज्र च (2) M reads चन्द्रेण (3) B reads स्वर्णपत्रे रसेन तु D reads स्वर्णपात्रे रसेन तु M reads पर्णपत्रे रसेन तु (4) M reads पश्चात् (5) तारे सार च योजयेत् a variant in D सार्वेतातु योजयेत्, a variant in K शुल्व तारे नियोजयेत्, a variant in M (6) D reads वेधयेद्धेम K reads बधयेद्धेम (7) हेमा रस च वेधयेत् a variant in D K reads बधयेद्रस (8) D reads वेधयेद्देह K reads बधयेद्देह (9) मंदेहोल्पजमामकम्, an incorrect variant in D K reads स देहसजरामर M reads स देहो-जरामरम् which is incorrect (10) B reads कदली. D reads शार्के च and K reads साक च instead of सौवीर. M reads दस instead of कद (11) कदस्वकाल्पुत, and कण्टक पितम् incomplete variants in D and M respectively (12) D reads क्रमण K reads क्रमणां M reads का (13) M reads सर्वद्वेम (14) M reads तिमिमस्य (15) B reads पेन्गारी M reads पोमारी. (16) B reads वेध्येत् D reads चर्म in place of वज्र

वज्रमूषागतं[1] ध्मातं हेमद्वन्द्वन्तु कारयेत्[2] ॥ १५१ ॥
कान्तपाषाणचूर्णं तु[3] भूलता रामठं मधु ।
गुञ्जा[4]टङ्कणकाचं च कर्कटास्थि स्नुहीपयः[5] ॥ १५२ ॥
एतत् सर्व्वं समं योज्यं[6] स्त्रीस्तन्येन च मर्द्दयेत् ।
भूपालिपगतं प्रान्ते[7] वज्रमेलापकः सुखी[8] ॥ १५३ ॥
हठाग्नौ वज्रमूषायां[9] दृढवज्रा मिलन्ति च[10] ।
सुसूक्ष्मा रजका[11] भूत्वा ह्येकीभावं[12] व्रजन्ति ते ॥ १५४ ॥
काचटङ्कणयोगेन ध्मातः[13] शुद्धिमवाप्नुयात् ।
बह्वभिश्चैव[14] मूषाभिस्तेजःपुञ्जो[15]ऽभिजायते ॥ १५५ ॥

---

(1) M reads वज्रीमूषागत (2) This hemistich is not found in D and K M has द्वन्दित तत्तु कारयेत् (3) M reads चूर्णेन (4) D has गन्ध, K has मध (5) B reads कर्काटास्थि K reads सुहिपय The portion commencing from the next sloka and ending in the last śloka of the 14th Patala is not found in M (6) तत् सर्वं च समायोज्य, a reading in D and K (7) B reads प्राज्ञो D reads मूखलिखगत K reads मूखालिपगत (8) वज्रकीसारक सुखम्, a variant in D वज्रकीमात्रक सुखा, a variant in K (9) K has हठाग्नौ B has वह्नमूषाभि. D has वज्रमूषायां (10) हठ वज्रे मिलि च, an incomplete variant in D हठ वज्र मिलति च, an incorrect variant in K (11) B and D read रवका, which seems to be incorrect (12) B reads ह्येकीभावे. K reads ह्येकिभाव, which is incorrect (13) The word ध्मात is not found in K (14) B reads वह्नभिश्चैव (15) B reads erroneously तेजपुञ्जो

मृतवज्रस्य भागैकं भागाः षोडश हाटकम्[1] ।
श्वेतकाचस्य चूर्णं तु भागान्[2] षोडश दापयेत् ॥ १५६ ॥
अन्धमूषागतं[3] ध्मातं वज्रबन्धं तु[4] कारयेत् ।
अनेन क्रमयोगेण सप्तवारांश्च[5] दापयेत् ।
*मिलते तत्क्षणं वज्रं[6] हेम्ना तु सलिलं यथा ॥ १५७ ॥*
चूर्णं नरकपालस्य[7] मृतवज्रे[8] तु दापयेत् ।
अन्धमूषागतं ध्मातं हेम्ना मिलति तत्क्षणात्[9] ॥ १५८ ॥
भृङ्गपत्रं नृकेशं च[10] मृतकान्तं सटङ्कणम्[11] ।
बालवत्सपुरीषं च स्त्रीस्तन्येन च[12] पेषयेत् ॥ १५९ ॥
मूषालेपं[13] ततः कृत्वा वज्रं हेम च[14] दापयेत् ।
अन्धमूषागतं[15] ध्मातं वज्रं मिलति नान्यथा ॥ १६० ॥

---

(1) D has an incomplete charana भागशेष हाटकम् (2) B has भाग D has भाग K has भागा. All the texts appear to be incorrect (3) Both D and K read अधमूषागत (4) B has वज्रकं तु D has वज्रकं तु (5) B reads सप्तवारं तु (6) This charana and the next are not found in B D has मिलिते सत्त्वमादधे, which is not grammatically correct (7) This charana and the next are not found in B K reads र चर्णं रक्तकपालस्य, which is senseless. (8) D reads मृत वज्र. (9) This charana and the next seven are repeated in D (10) D reads भृगपत्र च केश च K reads भगपत्र, which has no sense (11) मृत कान्तस्य टङ्कण, a variant in B K reads मृत्र (12) K wants च, so the charana being incomplete (13) K reads मूषालेप (14) B and K read वज्रं हेम च (15) K reads च धमूषागत

वज्रमूषागतं[1] ध्मातं हेमद्वन्द्वन्तु कारयेत्[2] ॥ १५१ ॥
कान्तपाषाणचूर्णं तु[3] भूलता रामठं मधु ।
गुञ्जा[4]टङ्कणकाचं च कर्कटास्थि स्नुहीपयः[5] ॥ १५२ ॥
एतत् सर्व्वं समं योज्यं[6] स्त्रीस्तन्येन च मर्दयेत् ।
मूषालेपगतं प्रान्ते[7] वज्रमेलापकः सुखी[8] ॥ १५३ ॥
हठाग्नौ वज्रमूषायां[9] द्वन्द्ववज्रा मिलन्ति च[10] ।
सुसूक्ष्मा रजका[11] भूत्वा ह्येकोभावं[12] व्रजन्ति ते ॥ १५४ ॥
काचटङ्कणयोगेन ध्मातः[13] शुद्धिमवाप्नुयात् ।
बहुभिश्चैव[14] मूषाभिस्तेजःपुञ्जो[15]ऽभिजायते ॥ १५५ ॥

---

(1) M reads वज्रीमूषागत (2) This hemistich is not found in D and K M has द्वन्द्वित सत्तु कारयेत् (3) M reads चूर्णेन (4) D has गन्ध. K has मध (5) B reads कर्काटास्थि K reads स्नुहिपय The portion commencing from the next sloka and ending in the last sloka of the 14th Patala is not found in M (6) सत् सर्वं च समायोज्य, a reading in D and K (7) B reads प्राज्ञो D reads मूखलेखगत K reads मूखालेपगत (8) वज्रकोसारक सुखम्, a variant in D वज्रकोमात्रक सुखा, a variant in K (9) K has हठाग्नौ B has वज्रमूषाभि. D has वज्रमूषायां (10) हठ वज्रे मिलि च, an incomplete variant in D हठ वज्र मिलति च, an incorrect variant in K (11) B and D read रजका, which seems to be incorrect (12) B reads ह्येकीभावे. K reads हेकिभाव, which is incorrect (13) The word ध्मात is not found in K (14) B reads बहुभिश्चैव (15) B reads erroneously तेजपुञ्जो

मृतवज्रस्य भागैकं भागाः षोड़श हाटकम्[1]।
श्वेतकाचस्य चूर्णं तु भागान्[2] षोडश दापयेत्॥ १५६॥
अन्धमूषागतं[3] ध्मातं वज्रबन्धं तु[4] कारयेत्।
अनेन क्रमयोगेण सप्तवारांश्च[5] दापयेत्।
मिलते तत्क्षणं वज्रं[6] हेम्ना तु सलिलं यथा॥ १५७॥
चूर्णं नरकपालस्य[7] मृतवज्रं[8] तु दापयेत्।
अन्धमूषागतं ध्मातं हेम्ना मिलति तत्क्षणात्[9]॥ १५८॥
भृङ्गपत्रं नृकेशं च[10] मृतकान्तं सटङ्कणम्[11]।
बालवत्सपुरीषं च स्त्रीस्तन्येन च[12] पेषयेत्॥ १५९॥
मूषालेपं[13] ततः कृत्वा वज्रे हेम च[14] दापयेत्।
अन्धमूषागतं[15] ध्मातं वज्रं मिलति नान्यथा॥ १६०॥

---

(1) D has an incomplete charana भागषोभ हाटकम् (2) B has भाग D has भाग. K has भागा. All the texts appear to be incorrect (3) Both D and K read चधमूखागत (4) B has वज्रबद्ध तु D has वज्रबद्ध तु (5) B reads सप्तवार तु (6) This charana and the next are not found in B D has मिलिते तत्क्षणाद्वज्रे, which is not grammatically correct (7) This charana and the next are not found in B K reads र चर्णं रत्नकपालस्य, which is senseless. (8) D reads मृत वज्र. (9) This charana and the next seven are repeated in D (10) D reads भगपत्र च केश च K reads भगपत्र, which has no sense (11) मृत कान्तस्य टङ्कण, a variant in B K reads मृत्वं (12) K wants च, so the charana being incomplete (13) K reads मूखालेप (14) B and K read वज्रं हेम च (15) K reads च धमूखागत.

कान्तं वज्रं[1] तथा गुञ्जा[2] गन्धकं च[3] चतुष्टयम् ।
स्तनक्षीरेण[4] पिष्टं तु मूषालेपं तु कारयेत् ॥ १६१ ॥
अन्धमूषागतं ध्मातं वज्रं मिलति तत्क्षणात् ॥ १६२ ॥
क्षीरेणोत्तरवारुण्या[5] मृतवज्रं तु भावयेत् ।
हेमपिष्टिकया मध्ये वज्रं तत्रैव निक्षिपेत् ॥ १६३ ॥
वेष्टयेद्भूर्ज्जपत्रेण[6] वह्निर्वस्त्रेण वेष्टयेत् ।
धान्यमध्ये तु संस्थाप्य पक्षमेकं निरन्तरम्[7] ॥ १६४ ॥
उद्धृतं तत् प्रयत्नेन वज्रबन्धं तु कारयेत् ।[8]
द्रुता वज्रास्तु[9] तेनैव मेलनीयास्तु पार्व्वति[10] ॥ १६५ ॥
द्रुतबन्धः स विज्ञेय.[11] शतसाहस्रवेधकः[12] ॥ १६६ ॥
रत्नानां तु तथा सर्व्वान्[13] वेधयित्वा यथाविधि[14] ।
शतसाहस्र[15]वेधी च देहसिद्धि[16]प्रदायक ॥ १६७ ॥

---

(1) B reads कांतमुख K reads कांतं भूख (2) K reads गुजां
(3) B reads गधकस्य (4) D reads स्तन्यक्षीरेण (5) D reads क्षारेणोत्तरवारुण्या (6) K reads भूर्यपत्रेण (7) B reads erroneously निरन्तरि (8) The portion commencing from वेष्टयेद्भुर्ज्जपत्रेण and ending in कारयेत् is not found in D (9) B has द्रुता वज्र स्तु तेन, an incomplete charana D has शतवज्रांस्तु मुखेण K has द्रुतवज्रस्तु तेनैव (10) D reads पार्वती, which is incorrect (11) B reads द्रुतबंध. D reads मूतबंध स विज्ञेया, which is incorrect (12) B has शतसाहस्र वेधक D has सप्तसाहस्रैकवेधक (13) This charana and the next two are not found in B K has रत्नानां द्रुतय सर्वां. (14) D reads यथाविधि, which is incorrect (15) D reads सहस्र (16) B reads देहे सिद्धि D reads देहे सिद्धि, which is incorrect

मुसली[1] चित्रकं वन्ध्या-कर्कोटी कन्दपद्मिनी[2] ।
कञ्चुकी नीलसिन्दूरी[3] वासा[4] नागबला तथा ॥ १६८ ॥
कांस्यपात्रे[5] रसश्चैव रत्नानां द्रुतयस्तथा[6] ।
आतपे धारयित्वा तु[7] अन्धकर्पानलस्तथा[8] ॥ १६९ ॥
ओषधीनां[9] रसं कृत्वा स्वच्छं[10] कृत्वा पुनः पुनः ।
याममात्रं च घर्मे तु[11] द्रुतिर्मिलति वै रसम्[12] ॥ १७० ॥
न तेषां क्रामणं शक्यं[13] वक्तुं वर्षशतैरपि[14] ॥ १७१ ॥
सैन्धवं निम्बपत्राणि वाकुची वेष्टिता[15] जले ।
द्रुताभ्रस्य रसेनैव[16] मेलनं परमं मतम्[17] ॥ १७२ ॥

---

(1) K reads मुसलि, which is incorrect. (2) D has पद्मनि, which is incorrect. (3) B has नीलसिंदूरा. K has नीलसिंधूरी. (4) D reads वांसा. K reads वसा. (5) K reads कांसपात्रे. (6) B has द्रुतयस्तथा, which seems to be the error of the scribe. (7) B reads वै. D reads धारयित्वा तु. (8) अंधकैवामल तथा, a variant in B. अन्ध कुर्व्वान्नलो यथा, a variant in D. Both the texts have no sense. Mysore Manuscript (My) reads अन्ध कर्पामल तथा, which is not clear. (9) B reads पधिनीनां (10) D reads स्वेदं. (11) याममात्रं विघर्मे च, a variant in B. याम पात्रे च धर्मे तु, a variant in D. (12) क्षिति मिलति वै रसै, a variant in D. द्रुतिर्मिलति चैव हि, a variant in K. (13) तेषां क्रमेणाशक्तं, a variant in B. D has क्रमणं शक्तं. K has क्रामणा शक्तो. (14) B reads वक्षशतैरपि. K reads वत्सशतैरपि. (15) B and My have वाकुचिवेष्टिया. D has वाकुचीवेष्टिता. K has वाकुचि वेष्टिता. (16) B reads erroneously द्रुताभ्रस्य रसैवमे. D reads द्रुताभ्रस्य रसैनैव. (17) मेलनैव वचरमतम्, a variant in D.

वज्रं द्वन्द्वनमीशानि[1] वज्रेण रसमारणम्[2] ।
सबीजं मारणं प्रोक्तं[3] खोटबन्धनमेव च[4] ॥ १७३ ॥
तत्समाचक्ष्व देवेशि किमन्यच्छ्रोतुमिच्छसि[5] ॥ १७४ ॥

इति श्रीपार्वतीपरमेश्वरसंवादे[6]
रसार्णवे रससंहितायां
वज्रबन्धो नाम[7]
चतुर्दशः पटलः ॥ १४ ॥

---

(1) वज्रद्वन्द्वनखीशानि, a variant in B वज्रद्वन्द्वममीशानि, a variant in My D wants this charaṇa and the next (2) K has वज्रेण सह मारण (3) सबीजमारण प्रोक्त, a variant in B and My वज्रस्य मारण प्रोक्त, a variant in D. (4) D has सबीज खोटबन्धनम् My has खोटत्व बन्धमेव च (5) किमन्यच्छ्रोतुमर्हसि, a variant in K. (6) This portion is not found in B and My. D and K read श्रीभैरवसंवादे (7) B has वज्रबन्धयोगो नाम

# पञ्चदशः पटलः ।



श्रीदेव्युवाच ।

महारसैरुपरसै[1]र्लोहैश्च परमेश्वर[2] ।
आज्ञापय समस्तं तु[3] रसराजस्य बन्धनम्[4] ॥ १ ॥

श्रीभैरव उवाच ।

[ वीजानि कल्पितान्येवं रञ्जितानि परं शृणु ।
घनं माचीकचूर्णेन शुल्वचूर्णेन रञ्जितम् ॥
द्वन्द्वानं वाप्यसत्त्वेन रसराजस्य रञ्जनम् ।
आरक्तवल्लीभिर्मूत्रैर्बहुधा परिकीर्त्तितम् ॥
कुसुदोगन्धपाषाणे सह माचिकहिङ्गुलैः ।
वापित सेचितो रक्तगणस्वेदैर्मतो रसः ॥
रञ्जनं रसराजस्य ][5]

(1) D has महारसै तुपरसै, which seems to be incorrect K has रूपरसै, which is an error of the scribe We do not find the first eight ślokas in the MS M (2) लोहैसत्वैश मेलन, a variant in B K reads परमेश्वर, which is inc. (3) D reads erroneously आज्ञापयाया-मस तु. My reads सत् (4) D reads रसाराजवन्धनम्, which is incomplete as well as inc. K has द्रवति सलिल यथा, which is inconsistant. After this śloka we find in B only the following verse —

सत्त्वायोषधीयत्वं देव वक्तुमर्हसि सकर ।

(5) The portion within brackets is found only in K MS, and is almost a repitition of what is stated in the 8th Paṭala (vide ante p 133) As it appears to us an incongruous matter in the chapter of रसबन्धन, we have kept it separate from the texts of other MSS

वैक्रान्तस्य तु भागैकं[1] चाष्टभागन्तु[2] सूतकम् ।
कनकस्य तु समांशं द्विपदी[3]रसटङ्कणम् ॥ २ ॥
नष्टपिष्टं च शुष्कं च[4] ध्मातं[5] खोटी भवेत् प्रिये ।
सौवीरं टङ्कणं काचं दत्त्वा दत्त्वा तु[6] शोधयेत् ॥ ३ ॥
समहेम्नि[7] समावर्त्य सूतं[8] मूषागतं ततः[9] ।
समांशभक्षणं तं तु[10] शुद्धसूतेन[11] कारयेत् ॥ ४ ॥
वैक्रान्तं षोडशांशेन[12] पूर्व्वयोगेन धामयेत् ।
दशसंकलिकायोगात् वेधो दशगुणोत्तरः[13] ॥ ५ ॥
[ सप्तसंकलिकायोगो वेधो दशगुणोत्तरः ।
वैक्रान्तो वज्रवत् क्रेयो नात्र कार्य्या विचारणा ॥ ][14]
पुनरन्यं प्रवक्ष्यामि प्रयोग भुवि दुर्लभम् ॥ ६ ॥
वैक्रान्तसत्त्वं देवेशि पारदेन समन्वितम्[15] ।

---

(1) D reads न भागैक, which seems to be incorrect. K has onl भागैक and wants वैक्रान्तस्य तु (2) B and My read मष्टभाग तु (3) ] reads द्रौपदी (4) नष्टपिष्टि च शुष्क च, a variant in B and My नष्टपि चतु पच, a variant in K (5) B and K read ध्मात (6) D has द दरद च, which is not clear in sense K reads च in place of तु ( K reads समे हेम्नौ, wherein the last word is grammatically incorrec (8) B and My read मूक (9) D has मूखागत यत, whic appears to be incorrect K has also मूखागत (मूखा=मूषा) (1 K reads समांशभक्षणं ततु (11) D and K read शुद्ध सूतेन (12) वैक्रान्त षोडशाङ्गेन, a reading in D (13) B reads सप्तसंबधौ भवेद्रस (14) The portion within brackets is found only in B (15) I reads समम्वित which is incorrect

जारितं समहेम्ना तु शिलाभाण्डे निधापयेत्[1] ॥ ७ ॥
माससमात्रोषितं[2] भूमौ समुद्धृत्य[3] प्रयत्नतः ।
एष देवि रसो दिव्यो देहद्रव्यकरो भवेत् ॥ ८ ॥
वैक्रान्तकास्तु ये[4] केचित् त्रिफलाया रसेन च ।
भूम्यामलकसारेण वसुभट्टरसेन च[5] ॥ ९ ॥
एकैकं देवि सप्ताहं[6] स्वेदिता मर्दितास्तथा[7] ।
मुषाता मूकमूषाया[8] खोटो भवति चाक्षयः[9] ॥ १० ॥
कान्तं रूप्यं सकनकं[10] पारदं चैव योजयेत् ।
शुल्वं तृतीयभागन्तु[11] स्रोतोऽञ्जन[12]समन्वितम् ।

---

(1) D, K and My read शिलाभाण्डेन दापयेत्, which has no clear sense (2) D reads erroneously माससमापोषित (3) D reads समाहृत्य. K reads समुद्धृत्य The former has no sense, and the latter is grammatically incorrect (4) वैक्रान्तकास्तु यै, a variant in D, which is incorrect (5) वसुभेदे रसायने, a variant in D वसुभट्टरसेन वा, a variant in K (6) D reads सप्ताह K reads देवी Both are incorrect. (7) B has स्वेदितमर्दितस्तथा D and K have स्वेदितो मर्दितस्तथा We have adopted the reading of M, as there are वैक्रान्तका in the 9th śloka. (8) मुषातो मूलमूषायां, a variant in D मुषातो मूक मूषायां, a variant in K M reads मुषात (9) B reads चाक्षय. M reads चाद्दो भवति चाक्षया, which is incorrect (10) B reads कान्तं रूप्य च कनक K reads कान्तरूप्य सकनक M and My read कान्तरूप्यश्च कनक (11) D reads शुल्वतृतीयभाग तु (12) B and K read सौताञ्जन

तत् भातं खोटता याति[1] देहलोहकरं भवेत् ॥ ११ ॥
श्वेतवैक्रान्तचूर्णन्तु[2] हयमूत्रेण[3] मर्द्दयेत् ।
भार्द्रों सुस्निग्धमादाय[4] पले पलशतं चिपेत् ॥ १२ ॥
तारस्य जायते भस्म विशुद्धस्फटिकाकृति[5] ।
तद्भस्म मेलयेत् सूते[6] समभागे[7] विचक्षणः ॥ १३ ॥
चारयेत् रजतं सूते[8] हयमूत्रेण मर्द्दयेत् ।
पुटयेदन्धमूषायां[9] क्रमेण[10] मृदुवह्निना ॥ १४ ॥
क्रामणेन समायुक्तं[11] मूषामध्ये[12] विचक्षणः ।
अहोरात्रं[13] त्रिरात्रं वा भवेदग्निसहो रस.[14] ॥ १५ ॥
स्पर्शनात् सर्व्वलोहानि[15] रजतञ्च[16] करिष्यति ।

---

(1) B has त भातं, which is incorrect D reads सुभात K wants त and reads only भात M and My read त भातं which is inc (2) D reads erroneously वर्णं तु (3) D reads हयमारेण (4) This charana and the next seven are not found in D K has सुस्निग्धमादाय (5) B reads विशुद्ध स्फटिकाकृति K, M and My read विशुद्धस्फटिकाकृति, which is gram incorrect (6) M has मेलयत् सूत, which is in correct (7) B, M and My read समभाग (8) B wants सूत, which mars the metre K reads रजत सूत M reads रजित सूत Both are incorrect (9) D and K read मुखायां instead of मूषायां (10) B reads क्रामनै, which seems to be the error of the scribe (11) This hemistich is not found in D and M (12) B and K read मुखामध्ये (=मूषामध्ये) (13) M reads एकरात्र (14) D and K have भवेदग्निसहोदरे which has no clear sense (15) D has सर्वलोहानां This charana and the next six are not found in K (16) D reads रजतञ्च

भक्षितो[1] वक्ष्यमाणेन जरादारिद्र्यनाशनम् ॥ १६ ॥

रसस्य वक्ष्यते कर्म[2] जरादारिद्र्यनाशनम् ।
सप्तधा भावयेत्तस्य[3] व्याघ्रीकन्दाम्भसा रजः ॥ १७ ॥
पलं तस्य पलं हेम्नः पलं शुद्धरसस्य च[4] ।
शुद्धं भस्म भवेत् सर्व्वं[5] पुनर्हेमशतं[6] क्षिपेत् ।
तद्भस्म जायते क्षिप्रं[7] शुद्धहेमसमप्रभम् ॥ १८ ॥
तद्भस्म रसराजे तु पुनर्हेम्ना च मेलयेत्[8] ।
भवेदग्निसहो देवि[9] ततो रसवरो भवेत्[10] ॥ १९ ॥
स्पर्शवेधी भवेत् सूतः[11] कोटिवेधी महारसः ॥ २० ॥
रसाद्वैक्रान्तसत्त्वं च[12] हेम्ना तु[13] सह मेलयेत् ।

---

(1) This hemistich is not found in D, M and My. (2) रसस्य च भवेत् कर्म, a variant in D, which has no sense M reads काम instead of कर्म (3) D reads चरयेत् सत्व. (4) पल गुल्वस्य रसस्य च, a variant in B, which seems to be incorrect. (5) M has शुद्धभस्म भवेत् सूत (6) D and K read हेमसम. M reads हेमशता, which is grammatically incorrect (7) B and K read सर्वं (8) D reads तु लेपयेत् M reads तु instead of च (9) K reads erroneously भवेदग्निसहो देवी (10) ततो रसवरानने, a variant in B ततो रसवरो भवेत्, a variant in D ततो रसवरो भवेत्, a variant in K. We have adopted the reading in M and My. (11) D reads स्पर्शवेधा, which is incorrect. K has an incomplete charaṇa—स्पर्शवेत्सूत. (12) B and D read सत्वं च M and My read सत्त्वं (13) M reads च

समं तं जारयेत् सूतं[1] सारयित्वा समेन तु ।
सहस्रांशेन लोहानि वेधयेन्नात्र संशयः ॥ २१ ॥
कृष्णवैक्रान्तभागैकं शुद्धसूतपलाष्टकम्[2] ।
एकत्र मर्द्दयेत् खल्वे चूर्णं च भवति द्वयम्[3] ॥ २२ ॥
अस्य चूर्णस्य भागैकं[4] हेमभागसहस्रकम् ।
एकत्र मर्द्दयेत् तावत् यावद्भस्म तु जायते[5] ॥ २३ ॥
धमेत्तथान्धमूषाया[6] यावत् खोटो[7] भविष्यति ॥ २४ ॥
समाशभक्षणं[8] तस्य शुद्धसूतं तु कारयेत्[9] ।
वेधयेत् सर्व्वलोहानि स्पर्शमात्रेण पार्व्वति[10] ॥ २५ ॥
तच्चूर्णमभ्रकं[11] चैव रसेन सह मर्द्दयेत् ।
एकत्र मर्द्दयेत्तावद्यावद्भस्म प्रजायते[12] ॥ २६ ॥

---

(1) B has जायते सूते D has जारयेत् सूत K has जायते सूत M has ततश्च जारयेत् सूते (2) D has स च सूत पलाष्टक K has हेमभाग सहस्रक M has शुद्धसूतपलाष्टक (3) K wants this charaṇa and the next four My reads भवम् (4) M reads भागिक which is incorrect (5) This hemistich and the next one are not found in D (6) धमेत चांधमूषायां, a variant in B तदृभक्षवेदन्धमूषायां, a variant in M (7) B reads घोटो. M reads घोट़ी (8) B has समास भक्षण. M has समांशभक्षणं (9) M has पीटिकां कारयेत् बुध (10) B reads वेषता K reads पार्वती, which is grammatically incorrect M and My read देसता (11) D reads तच्चूर्णं गभक (12) B reads यावद्भस्म तु जायते, which is partly incorrect This hemistich and the next four are not found in D, M and My

षमेत्तदन्ध्रमूषाया[1] यावत् खोटो भविष्यति ।
समार्थ्यं भचण[2] तस्य पिष्टिका[3] कारयेद्बुध. ॥ २७ ॥
वेधयेत् सर्व्वलोहानि स्पर्शमात्रेण हेमता[4] ।
तच्चूर्णमभ्रकं चैव रसेन सह मर्द्दयेत् ॥ २८ ॥
स्वेदयेज्जारयेच्चैव[5] ततो वह्निसहो भवेत् ।
स रस [6] सारितश्चैव सर्व्वलोहानि विध्यति ॥ २९ ॥
पीतवर्णोऽपि[7] वैक्रान्ते रक्तकृष्णविधिर्मत.[8] ॥ ३० ॥
पीत[9]वैक्रान्तचूर्णं तु हेमचूर्णसमन्वितम्[10] ।
पीताभ्रकस्य चूर्णेन[11] मेलयित्वा महारस ।
स्वेदितो मर्द्दितश्चैव मासादग्निसहो रसः ॥ ३१ ॥
श्वेतं पीतं तथा कृष्णं रक्तवर्णं तथैव च[12] ।
एव चतुर्विधा वर्णा[13] वैक्रान्ते वरवर्णिनि ॥ ३२ ॥
वज्रस्थाने तु वैक्रान्तो[14] मेलनं परमं मतम् ।

---

(1) B reads भवेत्तदन्धमूषायां (2) K reads भावयेत् (3) B reads पीठिका (4) B and K read हेमतां, which seems to be incorrect (5) M reads स्वेदयेत्तारयेच्चैव (6) D reads सारता M reads सरित.. Both the readings seem to be incorrect. (7) D reads सितवर्णोऽपि, which is incorrect, सितवर्ण being already mentioned in the 12th śloka. (8) B reads रक्तकृष्णविधिर्मत, which appears to be incorrect K reads रक्तकृष्णादिकमंत (9) D reads पीत. (10) हेमचूर्ण-समम, a variant in B हेमचूर्णं समन्वित a variant in K (11) D and K have चूर्णं तु (12) This hemistich and the next three are not found in D, M and My (13) B reads चतुर्विधो वर्णो (14) B reads वज्रस्थानेषु वैक्रान्त, which seems to be incorrect

देहलोहकरो यस्य[1] पारदो लोहवत्[2] प्रिये ॥ ३३ ॥
नीलवर्णस्तु वैक्रान्तो[3] म्रियते[4] रससयुत: ॥ ३४ ॥
कृष्णाभ्रकेण[5] सहित मधुसर्पियुत च यत् ।
भक्षयेन्मण्डल देवि जीवेच्चन्द्रार्कतारकम् ॥ ३५ ॥
यस्य यस्य हि यो योग तस्य तस्य प्रयोगत: ।
मेलयित्वा रस गुञ्जा-मान त्रिमधुसयुतम् ॥ ३६ ॥
पथ्य क्षीराज्यशाल्यन्न[6] भोज्यमन्यच्च[7] वर्ज्जयेत् ॥ ३७ ॥
[ एकान्ते मक्षिकामध्ये निर्वास संस्थितो नर ।
रसमृत्युञ्जयो मन्त्र सदा जप्यो हृदन्तरे ॥
पशूना विमुखस्तत्र स्त्रीणा चैव न दर्शनम् ।
भस्मोद्धूलितसर्व्वाङ्गो मन्त्रध्यानपरायण. ।
वत्सर क्रमते मर्त्त्यस्तस्य सिद्धिर्न सशय ॥ ][8]
वैक्रान्तसत्त्वसयुक्त[9] लुङ्गाम्ले मर्द्दयेद्रसम्[10] ।

---

(1) K reads यस्य (2) K reads पारदे ह इवत् (3) After this charana we find the following hem stich in B only—

भवितसत्वे यथा सिद्धे चञ्चला सद्दरसा ।

which we have rejected for its incongruousness (4) D reads म्रमये M reads म्रयते Both are incorrect (5) This sloka and the next forty three ( i e 35—78 ) are not found in B (6) D has खोट चाराज्यशाल्यन्न M has चोर चीराज्यशाल्य न My has खोट वैक्रान्तशाल्यन्न (7) D reads भोज्यमन्यत् (8) The portion within brackets is found only in K MS (9) D reads वैक्रान्त सत्वसयुक्त, which seems to be inc. K reads सत्वसयुक्तो which is gram inc. (10) D and K have लुङ्गाम्लेन मर्दयेद्रसम् M has लुङ्गाम्लेन मर्द्देत् which appears to be inc.

तापयेत् कोष्ण[1]तापेन जलेन[2] परिपूरयेत् ॥ ३८ ॥
सत्त्व सूतञ्च समिश्र[3] धमेत् स्याद्रसबन्धनम्[4] ।
बद्ध रस[5] मुखे चिप्ता भूमिच्छिद्राणि पश्यति[6] ॥ ३९ ॥
निष्कमेका च वैक्रान्तम्[7] अम्लमूत्रेण मर्द्दयेत् ।
दिनमेकमिद देवि मर्द्दयित्वा मृतो भवेत् ॥ ४० ॥
चतुर्दिनमिद कृत्वा सम सूत समानयेत्[8] ।
मर्द्दन स्वेदन चैव पूर्व्ववच्छुद्धमानस[9] ॥ ४१ ॥
सप्तद्वन्द्वनमेकैक[10] सप्ताष्टमपल[11] भवेत् ।
मर्द्दयेन्मातुलुङ्गाम्ले[12] चतु पष्टिपुट ददेत् ।
उदयारुणसकाश, सर्व्वलोहानि वेधयेत् ॥ ४२ ॥
कृष्णाभ्रकस्य सत्त्व च रस हेमसम भवेत् ।

---

(1) संतापयेत्व च a variant in D My has कृष्ण (2) K reads जलेना, M reads मलेन (3) D reads सत्त्व सूत च समिश्रा K reads सत्व सूत च समिश्र M reads सत्वसूतञ्च सम्मिश्र which is inc. (4) धमेत्स्य रसबन्धनम् a variant in D धामयेत् रसबन्धनम् a variant in M (5) D reads बन्ध रस which is incorrect K reads बद्धरस (6) D reads पश्यति which is incorrect K reads भूमौच्छिद्राणि which is also incorrect (7) M reads निष्कमेकान्तु सक्रान्त which is an error of the scribe (8) D reads सम भवेत् M reads चमनयेत् (9) जायते शुद्धमानस, a variant in D (10) K reads सत्व वधनमेकैकं (11) D and K read सप्ताष्टमफलं M reads सप्तमाष्टपल My reads सप्तमाष्टफल (12) K reads लिङ्गाम्ले M reads लुङ्गाम्ल This charana and the next five are not found in D

निक्षिप्य वज्रमूषायां[1] धमित्वा खोटतां नयेत्[2] ॥ ४३ ॥
बद्धं रसं मुखे[3] क्षिप्वा ह्यजरामरतां व्रजेत् ॥ ४४ ॥
तेनैव भस्म संमिश्रं कृष्णाभ्रकसमं[4] भवेत् ।
शल्याविशल्या[5]मूलस्य वारिणा मर्द्दयेद्दिनम् ॥ ४५ ॥
भ्रमरायन्त्र[6]मध्यस्थं पुटं सप्तदिनं भवेत्[7] ।
तच्छुद्धं भस्म सेव्यं स्यात्[8] गुञ्जामानं तु मण्डलम्[9] ॥ ४६ ॥
एकाद्यं पञ्चमं मध्यं[10] पुनरेकं प्रशस्यते[11] ।
पूर्व्ववद्बन्धनाद्देवि[12] कोटिवेधी महारसः ॥ ४७ ॥

॥ इति वैक्रान्तबन्धः ॥

रक्तवर्णमयस्कान्तं[13] लाक्षारससमप्रभम् ।
भिन्नं क्षीरक[14]संकाशं तच्चूर्णं सूतसंयुतम् ।

---

(1) D and K read वज्रमुखायां. M reads सर्वमूषायां (2) M reads व्रजेत्. M reads बोटतां. (3) D reads बद्धरस मुखे M reads बद्ध रसमुखे. (4) D reads कृष्णाभ्रकसम, which has no clear sense (5) D has शाल्याविशाल्या M and My have शल्यानि शल्य, which is inc. (6) K reads भ्रमरीयन्त्र No mention is made of this apparatus (यन्त्र) in the रसरत्नसमुच्चय (7) D reads बदेत्. (8) न शुद्धभस्मसेव स्यात् a variant in D. तच्छुद्धभस्म सेव्य च, a variant in K (9) जीवेत् कल्पायुतं नर, a variant in K. (10) D reads एकाद्यापश्चिम मद्दे, which is unintelligible. My reads मद्दां (11) This hemistich is not found in K. (12) K reads पूर्ववद्बन्धनाद्देवि, which seems to be inc. (13) D has रक्तवर्णं भवेत् कान्त. M has रक्तवर्णमय कान्त (14) D and K read भिन्नक्षीरक M reads भिन्नचेद्रक.

मर्द्दयेच्छागरक्तेन घातं खोटो[1] भवेत् प्रिये ॥ ४८ ॥
स सूतः शतवेधी तु[2] सर्व्वव्याधिहरो भवेत्[3] ।
गुटिकां धारयेद्वक्त्रे जीवेद्वर्षसहस्रकम् ॥ ४९ ॥
पीतवर्णमयस्कान्तं भिन्नं[4] हेमसमप्रभम् ।
वेधयेत् सर्व्वलोहानि स्पर्शमात्रेण सुन्दरि[5] ॥ ५० ॥

इति कान्तबन्धः ॥

लाङ्गली करवीरश्च[6] चित्रकं गिरिकर्णिका[7] ।
स्त्रीस्तन्यं[8] टङ्कसौवीरं मूषालेपन्तु[9] कारयेत् ॥ ५१ ॥
चपलाद्विगुणं सूतं[10] सूताद्विगुणकाञ्चनम्[11] ।
नष्टपिष्टं तु तत् कुर्य्यात् अन्धमूषागतं[12] धमेत् ॥ ५२ ॥
तत्र स्थितो रसेन्द्रोऽयं[13] खोटो भवति शोभनः[14] ।

---

(1) D and K read रमात , which is not correct M reads घात वं द्दो.
(2) *D has an incomplete charana*— समूत शतवे तु (3) *D reads* शतव्याधिहरो भवेत्. K wants this charana and the next four ones
(4) D and My read भिन्न, which seems to be incorrect (5) द्राव येत् स्पर्शमात्रेण सर्वलोहानि सुन्दरि, a variant in M (6) D reads कामकवीरा (7) K reads गिरिकर्णिक (8) K reads स्त्रीस्तन्य
(9) *Both D and K read* मूखालेप तु, *which is not correct.* (10) चपलाद्विगुण सूत is the variant in D, M and My, which is inc चपलाद्वि गुण स तु is the variant in K, which is also incorrect. (11) M and My read erroneously सूताद्विगुणकाचनम् (12) Both D and K read *अधमूखागत, which is incorrect.* (13) K reads रसीयद्रा, which is absurd. (14) D reads शोभने वाद्दो भवति शोभन, an in correct variant in M

शताश[1] वेधयेन्नाग गुञ्जावर्णस्तु जायते[2] ॥ ५३ ॥
तेन नागशतांशेन शुल्व रक्तनिभ भवेत् ।
तेन शुल्वशतांशेन[3] तार विध्यति काञ्चनम् ॥ ५४ ॥
चपलस्य तु षड्भागा[4] तारभागास्तु सप्त च[5] ।
अष्टौ कनकभागास्तु[6] नव भागा रसस्य तु[7] ॥ ५५ ॥
त्रिंशद्भागा मिलित्वा तु भवन्ति सुरवन्दिते ॥ ५६ ॥
चित्रक करवीर च लाङ्गली गृध्रविट् तथा[8] ।
मर्दित मातुलुङ्गाम्ले[9] मूषालेपन्तु[10] कारयेत् ॥ ५७ ॥
अन्धयित्वा धमेद्देवि[11] खोटो भवति शोभन.[12] ।
तेन खोटशतांशेन[13] विद्धो नागोऽरुणो भवेत् ॥ ५८ ॥
तेन नागेन विद्ध तु[14] शुल्व गुञ्जानिभ[15] भवेत् ।
तेन शुल्वेन तार तु विद्ध[16] भवति काञ्चनम् ॥ ५९ ॥

---

(1) D reads शतांशेन K reads शतांशे (2) D has गुञ्जावस्य तु which is inc My has जायेत् (3) M reads नागशतांशेन which seem to be inc (4) K reads षड भाग M reads षड भाग which is inc (5) सप्त च तारभागका a variant in D K and M read तारभागम् which is inc. My reads तारा भागस्य which is also inc (6) Both D and M have कनकभागन्तु which is inc (7) M reads च (8) लाङ्गली गिरिकर्णिका a variant in D (9) मातुलिङ्गाम्ले is the reading in K (10) K reads मूषालेप तु (मूषा = मूषा) (11) My has माधयित्वा M has भवेद्द्वि (12) Both D and M read शोभने M reads खोटा (13) M reads खोटशतांशेन We do not find 66 ( 58—124 ) ślokas in D (14) M has सन् instead of तु My has विद्ध तु (15) M and My read गुञ्जाभम् (16) M reads विद्ध, which is inc

हेमाभ चपल[1] देवि पादार्द्धेन[2] तु सयुतम् ।
पादेन[3] कनक दत्त्वा क्रुनव्या मर्द्दयेत् चणम् ॥ ६० ॥
लाङ्गली चित्रकञ्चैव स्नीस्तन्य करवीरकम्[4] ।
ग्टध्रविष्ठा तथा[5] सर्व्वं मूषालेपं[6] तु कारयेत् ॥ ६१ ॥
तन्मध्ये तु स्थित धात खोटा भवति शोभन[7] ।
पूर्व्वोक्त वेधयेदेत[8] निर्व्वीज कनक भवेत् ॥ ६२ ॥
[ सुतप्ते लोहपात्रे च चिपेच्च पलपूर्णकम् ।
सबोज पारदं क्षत्वा चपलस्य तु वापयेत् ।
लाचाभो बध्यते सूतो गर्जेनेव महागज ॥ ][9]
॥ इति चपलबन्ध. ॥
शुद्धसूतपलैक तु[10] पलैक गन्धकस्य च[11] ।
एकीकृत्याथ समर्द्दा धुस्तूरस्य रसेन च[12] ॥
भावयेच्चक्रयोगेन[13] भस्मीभवति सूतकम्[14] ॥ ६३ ॥

---

(1) हेमाभचपल is the reading in M (2) M reads पादोर्धेन which is inc. (3) M and My read पारदे (4) कन्वीरकम् is the reading in M (5) M has ग्टध्रविष्टतया which is inc My reads तत (6) K reads मुखालय which is inc (7) खोट्टो भवति शोभन, a variant in M After this My has the following hemistich—तेन खोटप्रतापेन विद्धो नागोऽरुणो भवेत् । (8) K reads वेधयदत्त, which is inc (9) The portion with n brackets is found only in M and My (10) K reads बद्ध in place of शुद्ध M reads च instead of तु (11) K reads तु (12) धत्तूरसकेन तु a variant in K (13) M and My read भावयेचक्रयोगेन (14) भस्म भवति सूतक is the variant in M

अन्धमूषागतं ध्मातं खोटो भवति शोभनः ।
सूतं हेम च[1] नागं च चन्द्रार्कौ[2] चापि वेधयेत् ॥ ६४ ॥
पलैकं शुद्धसूतस्य कर्षैकं गन्धकस्य च[3] ।
मर्दयेत् स्निग्धखल्ले तु[4] देवदालीरसप्लुतम्[5] ।
मर्दयेत्तु कराङ्गुल्या[6] गन्धपिष्टिस्तु[7] जायते ॥ ६५ ॥
जम्बीरार्द्ररसेनैव[8] दिनमेकन्तु मर्दयेत् ।
पलाशमूलक्वाथेन मर्दयेत् त्रिदिनं ततः[9] ॥ ६६ ॥
पञ्चद्रावकसंयुक्तां वटिकां कारयेत् शुभाम्[10] ।
पलाशमूलकल्केन वटिकां तां प्रलेपयेत्[11] ॥ ६७ ॥
धमेत् खोटो भवेच्छेतः[12] काचटङ्कणयोगतः ।
शोधयेत् तत् प्रयत्नेन यावन्निर्मलतां व्रजेत्[13] ॥ ६८ ॥
तत्खोटं रञ्जयेद्देवि[14] त्रिगुणं पन्नगं ततः ।
शतशो रञ्जयेत् पश्चात् शुद्धाभ्रक[15]कपालिना[16] ॥ ६९ ॥

---

(1) K reads हेम च, which is unusual M reads सितहेम च. (2) M and My read चन्द्रार्कै (3) K has an incomplete charana कस्य च (4) स्निग्धखल्वे न is the reading in K and My (5) M has देवदालीरसैस्सह. (6) चाङ्गुष्ठेनापि सम्यक् an incomplete variant in M (7) M reads गन्धपिष्टन्तु. (8) जम्बीरस्य रसेनैव, a variant in M and My (9) त्रिदिन मर्दयेत्तत', a variant in M. (10) M reads दृढाम् (11) K reads तु लेपयेत् (12) M reads erroneously खोटो भवेत् श्वेते (13) K has सन्निर्मलत्वं व्रजेत् M has यावन्निर्मलतां व्रजेत् Both are incorrect (14) M has तद्खोटो जायते देवि My has त खोट जारयेद्देवि (15) M reads शुद्धाभ्रक (16) My reads कपालिका

शुल्वे तारे च खोटोऽयं[1] सहस्रांशेन वेधकः[2] ॥
गन्धकेन हते सूते[3] मृतलोहानि[4] वाहयेत् ॥ ७० ॥
पुनर्हेम समावर्त्त्य समांश भक्षणं[5] कुरु ।
जारिते शुल्वतारे च[6] घोष[7] विध्यति सूतकः[8] ॥ ७१ ॥
रस[9] हेमसमं कृत्वा पिष्टिकार्द्धेन गन्धकम्[10] ।
द्विपदीरजसा युक्तं मर्द्दयेट्टङ्कणान्वितम् ॥ ७२ ॥
नष्टपिष्टं च तत् शुल्व[11] ध्मातं खोटो भवेत्ततः[12] ।
सौवीर टङ्कणं काचं दत्त्वा दत्त्वा तु शोधयेत्[13] ॥ ७३ ॥
अक्षीणो मिलते हेम्नि[14] समावर्त्तस्तु जायते ।
समांश भक्षणं हेम्नि[15] शुद्धसूतेन कारयेत् ॥ ७४ ॥
नष्टपिष्ट च तच्छुल्वं[16] ध्मातं खोटो भवेत्ततः[17] ।

---

(1) M reads खोटोय (2) M reads वेधयेत् (3) गन्धके मिलिते सूते, a variant in M गन्धकेन हिते सूते a variant in My. (4) K reads मृतलोहानी, which is gram inc (5) K has समांसशस्य, which has no sense at all (6) जारीतशल्वसूतार, a variant in M, which is unintelligible जारित शल्वतारे च a variant in My (7) K reads घाष, which appears to be incorrect (8) M and My read सूतकम् (9) M reads सूत My reads रस which is incorrect. (10) K and My read गन्धकं M reads गन्धकौ, which appears to be incorrect (11) M and My read शुल्व (12) ध्माती भवति खोटक, a variant in My (13) This hemistich and the next four are not found in M (14) My reads मिलति हेम्ना (15) My reads स तु (16) My reads तच्छुल्व. (17) This hemistich is written in My after the next hemistich

द्विपदीरजसा युक्तं मर्द्दयेत् टङ्कणान्वितम् ॥ ७५ ॥
चन्द्रार्कपीडशांशेन[1] विद्धं भवति काञ्चनम् ।
हेमार्द्धं मिलितं तत्तु[2] मातृकासमतां[3] व्रजेत् ॥ ७६ ॥
कुर्य्यात् संकलिकायोगात्[4] वेधं[5] दशगुणोत्तरम् ।
यथा हेम्नि तथा तारेऽप्यादिवीजानि योजयेत्[6] ॥ ७७ ॥
तृतीयसकलाबद्धं[7] षट्शतांशेन वेधयेत्[8] ।
चतुर्गुणेन तेनैव सहस्रांशेन काञ्चनम् ॥ ७८ ॥
अनेन क्रमयोगेण सप्त सकलिका यदि ।
कुरुते काञ्चनं दिव्यमष्टौ लोहानि सुन्दरि[9] ॥ ७९ ॥
न पुनर्घूर्णयित्वा तु[10] पुटेऽस्य प्रजायते[11] ।
सर्व्वव्याधिहरो देवि[12] पलैके तस्य भक्षिते ॥ ८० ॥
द्विपले[13] ब्राह्ममायुष्यं[14] त्रिपले[15] वैष्णवं भवेत् ।

---

(1) M and My read चन्द्रार्क पीडशांशेन (2) M reads हेमाद्य which appears to be incorrect My reads त तु (3) M has मातका, which has no clear sense (4) मङ्कलिकायोगात् is the variant in M (5) M reads वेध्य (6) स्यादीजानि योजयेत् an incomplete charana in K ऽप्यादिवीजेन योजितम् a variant in M My reads व्यादिवीजानि योजित. (7) वतीयमङ्गलावम्र a variant in M (8) षट्शते भाग वेधक a variant in K and My which is partly incorrect (9) M reads विश्वसि (10) B wants तु (11) Both B and M read पुटयेदस्य जायते My reads स्रोग्यस्य जायते (12) My reads सर्व व्याधि हरेदेवि, which is incorrect (13) K reads द्विपल. My reads देपल which is incorrect (14) B and My read ब्रह्ममायुष्य K reads ब्रह्म मायुष (15) K reads त्रिपल My reads त्रिपले which is incorrect

चतुःपले तु रुद्रत्व मीश.[1] पञ्चपले भवेत् ॥ ८१ ॥
षट्पले भक्षिते देवि सदाशिवतनुर्भवेत् ॥ ८२ ॥
सूतकं गन्धकं तारं[2] मेषवल्लीरसेन च[3] ।
त्रिदिनं मर्दयेत्तीक्ष्णं[4] वङ्गपादेन मेलयेत्[5] ।
अन्धमूषागतं ध्मातं वङ्गं स्तम्भयति क्षणात् ॥ ८३ ॥
चूर्णितं गन्धकं देवि मर्कटी[6]रसभावितम् ।
भावयेच्छतवारांस्तु जीव[7]भस्म तु गच्छति ॥ ८४ ॥
दीपयेन्मृन्मये[8] पात्रे रसेन सह संयुतम् ।
तापयेद्रवितापेन मर्कटी[9]रससंयुतम् ।[10]
गन्धकं ग्रसते सूत.[11] पिष्टिका[12] भवति क्षणात् ॥ ८५ ॥
तिलपर्णी[13]रसेनैव गन्धकं भावयेत् प्रिये ।
सप्त वारांस्तु देवेशि छायाशुष्कं पुन पुनः ॥ ८६ ॥
शोधितं पातितं सूतं पलैकप्रमितं[14] प्रिये ।

---

(1) All the texts read ईश , but ऐश is proper (2) M reads थाल (3) मेषवल्लीरसे समा, a variant in B अष्टवल्लीरसेन च, a variant in K. मेषवल्लीरसेऽपि, a variant in M. मेषवल्लीरसे समा, a variant in My (4) M and My read मर्दयेच्चूर्णं. (5) चक्रपत्रेषु लेपयेत् a variant in M वङ्गपादेन लेपयेत् a variant in My (6) My reads कर्कोटी (7) My reads बीज. (8) B and My have दापयन्मृण्मये M has स्थापयेन्मृण्मये (9) My reads कर्कोटी. (10) This hemistich is not found in K (11) K reads सूत (12) M reads पिष्टका (13) K reads तिलपर्णि (14) B and My read पलैक प्रमित, which is not correct K reads पलैक समत which is senseless

पलैकनागपत्राणि[1] तेन कल्केन[2] लेपयेत् ।
मारयेत् पुटयोगेन नागोऽयं म्रियते[3] क्षणात् ॥ ७० ॥
वटिकां कारयेत्पश्चात् षष्टिं त्रीणि शतानि च ।
एकैकां वटिकां पश्चाल्लोपितेन तु मर्दयेत् ॥ ७१ ॥
अनेन क्रमयोगेण शतं दद्यात् पुटानि च[4] ।
नागोऽयं जायते देवि सिन्दूरारुणसन्निभः[5] ॥ ७२ ॥
शतांशेन च तेनैव[6] तारे वेधं[7] प्रदापयेत् ।
तत्तारं जायते देवि देवाभरणमुत्तमम्[8] ॥ ७३ ॥
मृतनागपलैकं तु[9] हेमपत्रं तु तत्समम् ।
मारयेत् पुटयोगेन म्रियते हेम[10] तत्क्षणात् ॥ ७४ ॥
तद्भस्मनागैकयुतं[11] हेमपत्रं तु तत्समम् ।
मारयेत् पुटयोगेन म्रियते हेम तत्क्षणात् ॥ ७५ ॥
अनेन क्रमयोगेण त्रीणि वाराणि[12] कारयेत् ।
सहस्रांशेन तेनैव तारे वेधं[13] प्रदापयेत् ॥ ७६ ॥

---

(1) This hemistich and the next one are put in B after the 71st śloka पलैक नागपत्राणि, a variant in K (2) D has तिलकल्केन. (3) D reads म्रयते, which is grammatically incorrect (4) शत दद्यात् पुट प्रिये, a variant in B (5) B reads सन्नभ, K reads सन्नभ (6) D reads तेतेन (7) D reads तारवेध (8) B reads देवाभरण भूषण. This hemistich is not found in D (9) मृतनाग पलैकन्तु a variant in D. (10) D reads देवि, which is not accurate K reads जीर्यते, which is incorrect (11) तद्भस्मनागैकयुत, a variant in B. D and K read युक्त (12) This is grammatically incorrect (13) D reads तारवेध

सुखसाध्यप्रयोगेन[1] तत्तार कनकं भवेत् ।
कल्कवेधमतो वक्ष्ये[2] सुखसाध्यं सुरेश्वरि ॥ ७७ ॥
पलाशनिम्बविल्वाम्र-कार्पासकटुतुम्बिनी ।
कङ्गुणीकटुतैलं च[3] एकैकं रसमारकम्[4] ॥ ७८ ॥
समे हेम्नि समं सूतं[5] तारं ताम्रमथापि वा[6] ।
महारसाष्टमध्ये तु चत्वारोपरसास्तथा[7] ॥ ७९ ॥
फलाम्लकाञ्जिकैर्मध्य[8]-निरङ्गारे तु[9] खलयेत् ।
तप्तायसेऽथवा लोह[10]-मुष्टिना मृदुवह्निना ॥ ८० ॥
प्रागुक्त[11]वालुकायन्त्रे तैलं दत्त्वा विचक्षणः ।
मर्दयेत् पक्षमेकं तु[12] दिवारात्रमतन्द्रितः ॥ ८१ ॥
तत्कल्कं जायते श्रेष्ठं धर्मकामार्थमोक्षदम् ।
वेधयेदष्टलोहानि देवानामपि दुर्लभम् ॥ ८२ ॥
नाशयेत् सकलान् रोगान् पलैकेन न संशयः ।
त्रिकटुत्रिफलायुक्तं मध्वाज्येन तु भक्षयेत् ॥ ८३ ॥

---

(1) This charaṇa is wanting in B This hemistich is not found in D (2) B reads ततो वचो D reads कल्के वेधमतो K reads कल्कवहमतो लक्ष्ये, which is incorrect (3) कगुणी कटुत्र तैल, a variant in D. (4) B reads रसमारण (5) B has समे मृत, which is incorrect. (6) तार तार्म तथापि वा, a variant in D. (7) चत्वार उपरसास्तथा is the correct grammatical form (8) B reads फलाम्ल काञ्जिकैर्मध्या D reads मृदा, which seems to be incorrect (9) B has निवङ्गारे तु D has निरत्थ ते तु, which is unintelligible. (10) तप्तादायसेऽथवा लोहे, a variant in D. (11) D reads प्रयुक्त (12) B reads च

हेम्ना तु बद्ध गुष्ठिक[1] तारेण दे[2] सुरेश्वरि ।
ताम्रेण गुञ्जाचितय[3] वर्षात् स्यादजरामर ॥ ८४ ॥
सेवन्ते चन्द्रवदना सर्व्वाभरणभूषिता ।
त्रिफलावीजमध्वाज्य नस्य कृत्वा निशासु च[4] ॥ ८५ ॥
रस तु[5] भक्षयेत् प्रातरजीर्ण नैव जायते ।
गन्धक पानमालेप[6] कष्टुष्ठ भक्षयेद्बुध ॥ ८६ ॥
पलेन[7] भक्षयेत् सूत सुरासुरनमस्कृतम्[8] ।
तप्तहेमनिभाकारो बालार्कसदृशप्रभ ॥ ८७ ॥
वेधयेत् सर्व्वलोहानि छेदे दाहे[9] न सशय ।
बद्धा तु सकलाबन्धे[10]र्वटिका[11] खेचरी भवेत् ॥ ८८ ॥
काकजङ्घा च बृहती शरपुङ्खाजशृङ्गिके[12] ।
शिवा[13] शक्रलता[14] कन्या समेतास्तु[15] महालता ॥ ८९ ॥

---

(1) हेमस्तु पलगुष्ठैक a variant in D K reads फलगुष्ठैक (2) D reads त रेणार्ज्जे K reads त रेणार्ड (3) D has गुञ्जाचितये (4) निश तुप्त is the incorrect reading in D (5) K reads एव तु which is incorrect (6) गन्धकेनाथ मालेप a variant in D (7) K reads चनेन (8) K has an incomplete charana—सुरनमस्कृत (9) D reads छेन्नाहे This hemistich is not found in K (10) B reads वद्धस्तु which is incorrect बद्धा कष्विकलावेधे a variant in D बद्धास्तु सकलाबुधे a variant in K (11) B reads घुटिका (12) पुरित पुखाचभृंगिके a variant in B शरपुङ्खाजभृङ्गिका a variant in D सुस्य पुखाजशृंगिका a variant in K (13) B has शिवा D has शिव K has शिव which seems to be incorrect (14) B reads शकलता D reads शक्रलता which is correct (15) समेते तु महावला a variant in B समेते तु महलत a variant in D समेतस्तु महालता a variant in K

गुह्याद्गुह्यं समाख्यातं वातारिस्त्रेहसंयुतम्।
समे हेम्नि समं सूतं[1] तारे ताम्रेऽथवा प्रिये ॥ ८० ॥
महारसाष्टमध्यैकं दद्यात्तूपरसास्तथा[2]।
मर्द्दयेत् खल्लपाषाणे[3] यावन्निश्चेतनं भवेत् ॥ ८१ ॥
स्वेदयेदारणालेन[4] मर्द्दयेत् पूर्व्वकल्कवत्।
तच्च लोहस्य देहस्य तत्तत्कर्म्मसु[5] योजयेत् ॥ ८२ ॥
हेमाभ्रकस्य चैकैकं सूतकस्य द्वयं तथा[6]।
ताराभ्रकस्य चैकैकं सूतकस्य द्वयं तथा[7] ॥ ८३ ॥
पिष्टिकां कारयेत्तेन निगलेन च बन्धयेत्।
पुटेषु पिष्टिकाबन्धो[8] गोलेन निगलेन च[9] ॥ ८४ ॥
पुनरन्यं प्रवक्ष्यामि चूर्णबन्धं सुरेश्वरि[10] ॥ ८५ ॥
पिष्टिका[11] टङ्कणं दत्त्वा द्विपदीरस[12]मर्द्दितम्।
नष्टपिष्टं च शुष्कं तत्[13] धामयित्वा पुटे[14] पचेत् ॥ ८६ ॥

(1) B reads समे सूते (2) दद्यादुपरसांस्तथा, a variant in B (3) D reads खलु पाषाणे (4) D and K read स्वेदयेद्दारुणालेन (5) B reads तत्र कर्मसु D reads तत कर्मसु (6) D reads सूतकस्याद्दसं तथा, which seems to be incorrect (7) This hemistich is not found in D K reads सूतक द्वितय तथा (8) All the texts have पिष्टिका बद्धो, which seems to be incorrect (9) B reads वा After this we find the following in B only—इति पिष्टिकाबंध। (10) D has चूर्णबन्ध सुरेश्वरी, which is incorrect (11) B reads पौष्टिकां (12) B has द्विपदीरज (13) नष्ट पिष्ट च शुष्क तत् a variant in B नष्ट पिष्ट च शुष्कं च, a variant in D (14) B reads रुधित्वा पुटे D and K read पुट

वेष्टयेद्वद्विवेशि गोलेन निगलेन च[1] ।
तुषकार्पाग्निना भूमौ मृदुस्वेद तु कारयेत् ॥ ८७ ॥
अहोरात्र त्रिरात्र वा चूर्ण भवति शोभनम् ।
वद्वसकलिकाभावात्[2] भवेद्वेधा तु वेधकम्[3] ॥ ८८ ॥
पुनरन्य प्रवक्ष्यामि पट्टबन्ध[4] सुदुर्लभम् ॥ ८९ ॥
कासीस[5] टङ्कण क्षार सैन्धव गन्धमभ्रकम्[6] ।
सूतक[7] मातुलुङ्गेन मर्द्दित पुटवेधकम्[8] ॥ १०० ॥
वङ्गताराभ्ररसक[9] स्नुक्क्षीरक्षतगोलकम्[10] ।
वेष्टयेद्भूर्जपत्रेण वस्त्रसूत्रेण[11] वेष्टयेत् ॥ १०१ ॥
ऊर्द्धाधो[12] गोमय दत्त्वा भूमध्ये स्वेदयेत्तत ।
मर्द्दनं स्वेदन कुर्यात्त्रिवारानेवमेव च[13] ॥ १०२ ॥
लेपयेद्देग्रधर्माच्च[14] मर्द्दयेद्गुडकाञ्जिकै ।
धत्तूररसनिभाया मूषाया[15] सनिवेशयेत् ॥ १०३ ॥

---

(1) B reads वा (2) B reads योगात् (3) After this we find in K only the following incomplete sloka — वङ्गताराभ्रसयुक्त स्नुही चीरेण तासक । वेष्टयेत् भूर्जपत्रेण which is found afterwards in B and D (4) K reads पटवध (5) D and K read काशीस (6) D reads गन्धमाचकम् which seems to be incorrect (7) D wants सूतक (8) तस्य हे पुनर्वेधकम् an absurd variant in D K reads पटवधकं (9) D and K read वङ्गताराभ्रसयुक्त (10) D and K read स्नुहीचीरेण ताम्रकम् (11) D reads वस्त्र सूत्र ण (12) D reads ऊर्ध्वं which renders the charana incomplete (13) त्रीणि वाराणि सुन्दरि a variant in D त्रिणि वारांश्चैव च an incorrect variant in K (14) D reads द्रवधर्मात्र K wants this (15) B wants this

बद्धा मूषामुखं[1] देवि सन्धिलेपं तु कारयेत् ।
लोणमध्ये क्षिपेन्मूषां ऊहन्मूषां च[2] वाह्यतः ॥ १०४ ॥
मुखं तस्याथ मूषाया बद्धा लोणमृदा ततः ।
तुषकर्षाग्निना भूमौ मृदुखेदं तु[3] कारयेत् ॥ १०५ ॥
अहोरात्रं त्रिरात्रं वा चित्रधर्मा भवन्ति ते[4] ।
अनेनैव प्रकारेण सप्तवार[5] तु कारयेत् ॥ १०६ ॥
अन्तर्बहिश्च बद्धास्ते[6] धर्मशुद्धा भवन्ति ते ॥ १०७ ॥
गन्धकेन हतं सूतं कांचीकासीससैन्धवम्[7] ।
सुह्यर्कं टङ्कणं गुञ्जा रविचीरेण मर्द्दिता[8] ।
पुराणका भवन्त्याशु[9] धर्मकामार्थमोक्षदाः ॥ १०८ ॥
पञ्चभागं तु शुल्वस्य द्विभागं कुञ्जरस्य च ।
कारयेद्दलधर्मांश[10] लेपयेत् पूर्व्वयोगतः ॥ १०९ ॥
रसेन्द्रो रञ्जति[11] ह्येवं कर्त्तव्य सारणादिकम् ।
तत्समाचक्ष्व देवेशि किमन्यच्छ्रोतुमिच्छसि ॥ ११० ॥

---

(1) D reads मूखागत, which is incorrect. (2) K reads ऊहन्मूखा च, which is incorrect (3) D reads च (4) B reads तु D reads लिप्तधर्मा भवन्ति ते. K reads वितधर्मा भवन्ति हि (5) D has वार वार. (6) B reads विद्धास्ते. D reads बध्वाने, which is incorrect. (7) D and K have कांजिकीशीससैंधव. (8) D and K read मर्दयेत्, which seems to be improper here (9) पुराणार्कभयोत्याशु, a variant in D. पुराणका भयोत्याशु, a variant in K. Both seem to be incorrect. (10) कारयेद्दलधर्मांश, a variant in D and K (11) B reads रञ्जते K reads रञ्जिते, which is incorrect.

इति श्रीपार्वतीपरमेश्वरसंवादे[1]
रसार्णवे रससंहितायां
रसरञ्जनो नाम[2]
षोडशः पटलः ॥ १६ ॥

---

(1) B wants this portion (2) B and D read रञ्जनो नाम In the beginning of this Patala the Goddess asks the द्रावण of रस to be explained and not रञ्जन the latter being the final subject

## सप्तदश. पटल. ।



श्रीदेव्युवाच ।

द्रावण रञ्जन चैव पारदस्य स्रुत मया ।
सारण क्रामण चैव क्रमादाख्यातुमर्हसि[1] ॥ १ ॥

श्रीभैरव उवाच ।

मूषा तु गोस्तनीं कृत्वा धत्तूरकुसुमाकृतिम्[2] ।
तदर्द्धं[3] पूरयेत्तैल रञ्जित च रस क्षिपेत् ॥ २ ॥
तुषकर्षाग्निना वाह्ये मूषायास्तु[4] प्रदापयेत् ।
विशाश्र[5]नागसयुक्तं समावर्त्त च खोटकम् ।
दीर्घसदशनेनैव[6] प्रक्षिपेत् सारित भवेत् ॥ ३ ॥
द्विगुणेन ततो[7] हेम्ना जायते प्रतिसारितम् ।
ततस्त्रिगुणहेम्ना तु[8] जायते चानुसारितम्[9] ॥ ४ ॥

---

(1) D has an incorrect variant क्रमदस्यतुमर्हसि (2) D and K have धत्तूरकुसुमाकृति which is grammatically incorrect (3) All the texts read तस्यार्धं, which is grammatically incorrect D has an incorrect variant—तस्यर्ध तैलै पचैल (4) B reads मूषायां तु D and K read मूखायास्तु which is incorrect (5) D reads विशांश्र (6) B has दीघ सदर्शन नैव D and K have दीघसदशनेनैव (7) D reads ततो which is not correct (8) B reads ततस्त्रिगुण हैमा तु This hemistich and the next two are not found in D K reads ततस्त्रीगुण हैमा तु which is incorrect (9) B has चानुसारणा K has चानुसारित, which is incorrect

जारयेहिडयोगेन[1] प्राग्वच्चाथ पुन पुन ।
अनेन विधिना देवि भवेद्वेधा तु[2] वेधक ॥ ५ ॥
भूलताशोणितशिला[3] विषटङ्कणपारदम् ।
ताप्य स्त्रीस्तन्यसपिष्ट क्रामण चेपलेपयो[4] ॥ ६ ॥
इन्द्रगोपो[5] विष कान्त दरद[6] रुधिर तथा ।
रसक तिलतैल च क्रामण चेपलेपयो ॥ ७ ॥
भूलता माक्षिक[7]शिला टङ्कण रुधिर विषम् ।
काकविष्ठा स्तनचीर[8] महिषीकर्णयोर्मल[9] ।
रामठ च महेशानि क्रामण चेपलेपयो[10] ॥ ८ ॥
भूलता लाङ्गली शृङ्गी काकविष्ठा च शैलजम् ।
विष्णुक्रान्ता मधूच्छिष्ट[11] रुधिर द्विपदीरज ॥ ९ ॥
सुरसा ब्रह्मसोमा च रुद्रकर्णी च लक्षणा[12] ।
कर्णग महिषस्यापि[13] क्रामण चेपलेपयो ॥ १० ॥

---

(1) ज्वालयेद्विजयशैल a var ant in K wh ch seems to be incorrect
(2) B reads तु (3) D reads शोणित शिला K reads शोणित शिल
(4) D and K have चेपलपयेत् wh ch is incorrect (5) D read इन्द्रगोप which is incorrect (6) K reads सुदर (7) D read माचिक (8) D reads स्तनचीर wh ch mars the metre (9 महिषीकर्णज मल a variant in D (10) K reads erroneously चेप लपयेत् (11) भूलतावीशकर्ण च an incorrect var ant in B (12) रुद्रवन्ता विलक्षणा a var ant in D रुद्रवन्त च लक्षणा a variant in K (13 कर्णभौतादिमस्यापि a var ant n B कर्णागताहिमस्यापि a var a t in D कर्णगमहिषस्य पि a var ant in K The sense of all of them is not clear

गण्डोल[1] विषभेकास्य-महिषाक्षिमलं तथा[2] ।
रुधिरेण समायुक्तं रससङ्क्रामणं परम् ॥ ११ ॥
विष सुरेन्द्रगोपश्च[3] रोचना गुग्गुलुस्तथा ।
स्त्रीस्तन्यं[4] चैव तैर्युक्तो लोहे तु क्रमते[5] रसः ॥ १२ ॥
श्रीखण्ड[6]निम्बनिर्य्यास-स्त्रीस्तन्यविषटङ्कणैः ।
गोघृतेन समायुक्तो लोहे तु क्रमते रसः ॥ १३ ॥
अरिवर्गहतौ[7] वङ्ग नागौ द्वौ क्रामणं[8] परम् ॥ १४ ॥
मातृवाहः[9] कुलीरश्च गङ्गाभ्यन्तरजो मल ।
तथा कपित्थनिर्य्यासो[10] रससंक्रामणं परम् ॥ १५ ॥
क्रामणं रसराजस्य वेधकाले प्रदापयेत् ।
क्रामण यो न जानाति श्रमस्तस्य निरर्थकः ॥ १६ ॥
अतः परं प्रवक्ष्यामि हेमतारदलानि तु ॥ १७ ॥
नागं सूते समं घृष्ट गन्धद्वादशसंयुतम्[11] ।
धत्तूरकरसे घृष्टा गुटिका[12] चणकाकृतिः ॥ १८ ॥

---

(1) D reads गण्डाल्ले, which is incorrect. (2) महिषाचीमल तथा, a variant in B महीमाचीमलं तथा, a variant in K (3) B and K read विषसुरेंद्रगोपाश्च (4) K reads स्त्रीस्तन्यै which is inaccurate (5) D reads क्रमणी. K reads क्रमतो (6) B has स्त्रीबीज D and K have श्रीखण्ड (7) D reads अरिवर्गाहतौ, which seems to be incorrect (8) D has क्रमण, which is incorrect (9) D reads श्रीमातिवाह, which is incorrect (10) B reads निर्यासै which is incorrect (11) गन्धके द्वादशयुतम् a variant in D (12) B has इष्टघुटिका K has धत्तूरकरसे

तारस्य भागाश्चत्वार[1] शुल्वभागास्त्रयस्तथा[2] ।
सम्यगावर्त्य देवेशि गुटिकीका[3] तु निक्षिपेत् ॥ १८ ॥
अनेन क्रमयोगेण तारे ताम्र[4] तु वाहयेत् ।
यावत्तु जायते रक्त तारं चैव न सशय[5] ॥ २० ॥
अस्य भागद्वय ग्राह्य तारस्य भागपञ्चकम्[6] ।
हेमभागैकसयुक्त द्रुत[6] हेमाष्टक भवेत् ॥ २१ ॥
गन्धकेन हत शुल्वं दरदेन समन्वितम् ।
आर्द्रक मूलक शुण्ठी लसुन हिङ्गु माक्षिकम् ॥ २२ ॥
मर्दयेन्मातुलुङ्गेन[7] नागपत्राणि लेपयेत् ।
पुटेन म्रियते नाग सिन्दूरारुणसन्निभ[8] ॥ २३ ॥
तत्तारे त्रिगुणे व्यूढं[9] निर्वीज कनक भवेत् ॥ २४ ॥
गन्धपाषाणदरद तीक्ष्णखर्परसूतकैः[10] ।
भागद्वैः समध्वाज्यै[11] पञ्चमांशेन लेपयेत् ॥ २५ ॥
पुटनाच्छुष्कपुटनात्[12] द्विधा तारस्य क्षयता[13] ॥ २६ ॥

---

(1) D reads चत्वारि which is incorrect (2) D reads शुल्व भाग स्त्रय तथा which is incorrect (3) D and K read गुटिकैका (4) D and K read तारे ताम्रे (5) B has तारभागस्य पञ्चक (6) D reads द्रुत which is incorrect (7) K reads मातुलिङ्गेन (8) B and D read सप्रभ (9) B reads व्यूढ D reads व्यूढे K reads सद्गुते (10) D reads सूतका, which is grammatically incorrect K reads पाषाण in place of खर्पर (11) B reads erroneously समध्वाज्यै B reads भागद्वै (12) पुटेन तच्छुष्कपुटनात् a variant in D पुटयत् शुष्कपुटनात् a variant in K (13) द्विधा सयम्यतक्षता an incorrect variant in D

पीतगन्धकपाषाण निर्य्यासेन प्रलेपितम् ।
पुटत्रयप्रदानेन[1] रजतं काञ्चनं भवेत् ॥ २७ ॥
पीतकृष्णारुणगणं[2] यथालाभं सुचूर्णितम् ।
गोसर्पिर्भावितं तारे[3] वापेन श्वेतनाशनम्[4] ॥ २८ ॥
रक्तपीतासितगणं[5] छागक्षीरेण भूयसा ।
समाहं स्थापयेत्तारे[6] निषेकाद्रक्तिवर्द्धनम्[7] ॥ २९ ॥
यदा वाप[8]निषेकाभ्यां मार्ज्जारनयनप्रभम् ।
तत्तारं दलसंप्रोक्तं[9] मेलनं परमं मतम् ॥ ३० ॥
शुल्वस्य[10] कांस्यकृष्णं तु रसकेन तु रञ्जयेत् ।
द्वौ भागौ तस्य शुल्वस्य तारस्यैकं च मेलयेत् ॥ ३१ ॥
तदा तस्य रसेन्द्रस्य मेलनं परमं मतम् ।
वेधयेत् शुद्धसूतेन[11] शतांशेन सुरेश्वरि ॥ ३२ ॥
हेममाक्षिकलवणं[12] पेषयेन्मधुसर्पिषा ।

(1) पुटत्रय प्रयत्नेन, a variant in B, which seems to be incorrect (2) D reads गत instead of गण This charana and the next five are not found in K (3) गोसर्पिर्भावितातार, a variant in B (4) D has वापमे श्वेतनाशनौ, which has no clear sense (5) B reads सितरूप, which is evidently an error of the scribe (6) B reads erroneously स्थाप्येतरे (7) निषेकाद्रक्ते वर्धन, a variant in D, which is partly incorrect (8) D reads incompletely यथा सं K reads यथा वाप्य, which is not correct (9) D and K read तदा तस्य रसेन्द्रस्य, which seems to be improper (10) B reads शुल्व तु D reads शुल्वेन तु, which is incorrect (11) B reads सिद्धसूतेन (12) B reads हेम माक्षिकलोह च

कुङ्कुमाभं भवेद्यावत् तेन नागपुटे[1] पचेत् ॥ ३३ ॥
समं शुल्वं[2] ततो देयं तच्छुल्वं तारपञ्चकें[3] ।
त्रिवारं शोधयेद्दत्वा शुद्धं हेमदलं भवेत् ॥ ३४ ॥
वङ्गं नागं तथा[4] तीक्ष्णं शुल्वं तारं च पञ्चकम्[5] ।
त्रिवारं शोधयेद्दत्त्वा शुद्धं हेमदलं भवेत्[6] ॥ ३५ ॥
तालकं गन्धपाषाणं[7] माक्षिकं खर्परं[8] विषम् ।
मातुलुङ्गयुतं[9] लिप्ता वङ्गलोहं पुटे पचेत्[10] ॥ ३६ ॥
दरदं गन्धपाषाणं माक्षिकं सैन्धवं विषम् ।
मातुलुङ्गयुतं लिप्ता तीक्ष्णलोहं[11] पुटे पचेत्[12] ॥ ३७ ॥
कुनटी गन्धपाषाणं माक्षिकं सैन्धवं विषम् ।
मातुलुङ्गयुतं लिप्ता नागलोहं पुटे पचेत्[13] ॥ ३८ ॥
सर्व्वं हेमदले वाह्य[14] हेम बद्धेन[15] वेधयेत् ॥ ३९ ॥

---

(1) D has तेन नागपुट K has तेन नागपुट (2) B reads समं शुल्वं (3) B and K read तारपञ्चके which seems to be incorrect (4) K wants तथा (5) This hemstich and the next one are not found in D (6) This hemstich is not found in K (7) D reads हमपाषाण (8) B reads खपरो (9) K reads मातुलिंग युत (10) D reads पुट भवेत् which seems to be incorrect (11) K reads वङ्गलोह (12) After this śloka we find a śloka in B which is a repitition of the 36th having नागलोह in place of वङ्गलोह (13) This śloka is not found in D In K we see only the word कुनटी (14) B reads वाह्य D reads सर्वे हमरूपे which seems to be incorrect (15) B reads हम च तेन

सुल्वाग्नी हेमकरिणी[1] तीक्ष्णं द्विगुणमेव च[2]।
व्यूढं रक्तगणैः सिक्तं[3] तत्तारं कनकं भवेत् ॥ ४० ॥
शुल्वं ताप्यहतं[4] कृत्वा वरनाग[5] तु रञ्जयेत्।
तं नाग वाहयेत्तारे यावद्धेमदल[6] भवेत् ॥ ४१ ॥
विषं सूतसमं गन्ध[7] त्रिगुणाञ्जनसंयुतम्[8]।
अम्लेन त्रिदिन[9] पिष्ट्वा ताराकौं मेलयेत् समौ[10] ॥ ४२ ॥
पक्वं पञ्चमृदा चैव[11] पुटैस्तारावशेषितम्।
एवं वारत्रयेणैव रञ्जयेत्तारमुत्तमम् ॥ ४३ ॥
भुजङ्गस्य[12] च शुल्वस्य पृथगंश[13]चतुष्टयम्।
पृथग्द्वादशतैलस्य[14] रीतिकातारयोर्द्वयोः[15] ॥ ४४ ॥

---

(1) B reads शुल्वग्नी which is incorrect K reads erroneously हेम कर्णी (2) D has तीक्ष्ण द्विगुणं भवेत् (3) B reads रक्तगणे. D reads सिक्त, which is incorrect (4) B has शुल्वताप्य हत (5) D reads वारिणोग, which is unintelligible (6) D has यावद्यावेदल, which is incorrect (7) विष सूत सम गन्ध, a variant in B and K विषसूतसम गन्ध, a variant in D (8) B has त्रिगुण अञ्जनसयुत. D reads erroneously त्रिगुण येन सयुतम् (9) D reads त्रिगुण, which is evidently an error (10) ताराकं मिलयेत् समम् a variant in B ताक मिलय तत् समम् an incorrect variant in D (11) D has पूर्ववद्मृता चैव, which is partly correct K has पक्व पचद्मृता चैव which is incorrect. (12) B reads भुजगस्य (13) D and K read पृथगंश (14) पृथग्द्वादशतैलाक, an incorrect reading in B पृथग्द्वादशतैलस्य a variant in D पृथग्द्वादशतैलस्य, a variant in K (15) रीतिकतारयोर्द्वयो a reading in B रीतिकारकयो द्वयो, a variant in D. K has an incomplete chanting—रीतिकाताद्वयो

कनकस्य तु भागैक हेमताराविशेषितम्[1] ।
मार्ज्जाराचिप्रभ देवि वर हेमदल भवेत् ॥ ४५ ॥

तारोष्टक ताम्रचतुष्कभाग[2]
नागद्वय काञ्चनमेकभागम् ।
सर्व्वं ततो रक्तगणेन सिक्त
तारावशेष कनक करोति ॥ ४६ ॥

राजावर्त्त चतुर्थ च[3] दरदञ्च प्रवालकम् ।
हेममाक्षिकसयुक्त समभागानि कारयेत् ॥ ४७ ॥
रसकस्य[4] त्रयो भागा मेषीचीरेण[5] मर्द्दयेत् ।
वटिकां कारयेत् पश्चात् छायाया शोषयेत्तत ॥ ४८ ॥
पञ्चद्रावकसयुक्ता शिलापट्टेन पेषयेत् ।
अनेन सिद्धकल्केन तारारिष्ट तु योजयेत्[6] ॥ ४९ ॥
प्रथमे[7] समकल्केन द्वितीये तु तदर्धकम् ।
तृतीये पादभागेन तारारिष्ट तु जायते ॥ ५० ॥
पत्रे दाहे कषे च्छेदे[8] हेम तच्चाक्षय भवेत् ॥ ५१ ॥
सूतक दरद ताप्य गन्धक कुनटी तथा ।
गृहीत्वा क्रमवृद्धया तु शुल्वपत्राणि लेपयेत् ॥ ५२ ॥

---

(1) D reads हेमसमावशेषितम् which is not correct (2) K reads ताम्रचतुष्कभागे (3) D reads राजावर्तचतुर्थ च (4) K reads कारकस्य wh ch is i icorrect (5) मषाचीरेण in D, wh ch is incorrect (6) B reads तु जायते (7) B D and K read प्रथम but th s is i ot accurate (8) D reads स्वे wl ch seems to be incorrect.

चाङ्गेरीस्वरसे[1] पिष्ट्वा दापयेत्[2] पुटपञ्चकम् ।
तच्चूर्णं वाहयेत्तारे हेमाकृष्टिरियं[3] भवेत् ॥ ५३ ॥
कनके[4] योजयेद्देवि कृष्णवर्णं भवेत्ततः[5] ॥ ५४ ॥
गोमूत्रेण[6] निशां पिष्ट्वा शुल्वमावर्त्य[7] सेचयेत् ।
शतधा शोधनेनैव भवेत् काञ्चनतारकम् ॥ ५५ ॥
अथ कांस्योद्भूतं[8] ताम्रमारोटमथवा प्रिये ।
पड्गुणेन तु नागेन[9] शोधयित्वा ततो बुधः[10] ॥ ५६ ॥
शतांशं सिन्धुवारस्य रसमध्ये तु ढालयेत् ।[11]
कुष्माण्डस्य रसे[12] पश्चात् सप्तवारं तु दापयेत् ॥ ५७ ॥
तथा तक्रे निशायुक्ते सप्तसप्तं च[13] दापयेत् ।
शुकतुण्डकिंशुकाभं छेदे रक्तं मृदुं तथा[14] ॥ ५८ ॥

---

(1) D reads स्वरसे, which is an error of the scribe (2) K reads चपयत्, which has no sense (3) D reads हिमकष्टिरय, which is incorrect K reads हेमकृष्टिरिय (4) B reads कनकेन, which destroys the metre. This hemistich is not found in D (5) K reads भवेत्तु वा (6) D reads गोमूत्रे, which mars the metre (7) D reads शुल्वमावर्तं, which is incorrect (8) D reads कांस्योद्गत K reads कांस्योधन. Both the readings are incorrect (9) षड् गुणेन तुल्याग्निन, a variant in D. (10) B reads ततो नध, which is incorrect (11) After this 18 slokas ( 57—74 ) are wanting in B (12) D reads कुष्माण्डकरसे K reads कुष्माण्डस्य रस, the latter being incorrect (13) D has पुनस्तत्रैव K has सप्तसैव, which is grammatically incorrect. (14) छेदेरक्तश्चंसया an incorrect variant in D K reads मृदुस्तथा

ताप्येन वाप्यं कृत्स्नं तत्[1] शुल्वं कालिकया गतम्[2] ॥ ५

दरदं किंशुकरसं रक्तचित्रकमेव च ।
हरिद्रे[3] हे वरारोहे छागमूत्रेण पेषयेत् ॥ ६० ॥

दद्यान्निषेचन[4] शुल्वे सप्तवारं न संशयः ।
शुल्वं सिन्दूरवर्णं च वरं[5] हेमदलं भवेत् ॥ ६१ ॥

द्विगुणौ तीक्ष्णभुजगौ घोषकृष्णं[6] तु वाहयेत् ।
अथवा यन्त्रकारस्य[7] चैकद्वित्रिपलक्रमात्[8] ॥ ६२ ॥

त्रिपञ्चकं च[9] नागस्य शुल्वस्य च[10] पलं तथा ।
ध्मातं यदवशिष्टं[11] तत् तपनीयनिभं भवेत् ॥ ६३ ॥

लाङ्गली चित्रकं शिग्रुर्निर्गुण्डी करवीरकम् ।
स्नुह्यर्कक्षीरचिञ्चाम्ल वज्रकन्दसमन्विताम् ।
महिषीक्षीरसंयुक्तां सुरां देवि प्रकल्पयेत्[12] ॥ ६४ ॥

स्नुह्यर्कक्षीरलवणैः शुल्वपत्राणि लेपयेत् ।
सुरायां प्रथमोक्तायां दिनमेकन्तु पाचयेत् ॥ ६५ ॥

---

(1) तापयेद यतक्तृत्स तत्, a variant in K, which is incorrect. (2) K reads रत (3) K reads हारिद्रे. (4) D reads दद्यान्निषेचन (5) *D reads* रव (6) *K reads* घोषाकृष्ट (7) *K reads* यन्त्रकारस्य, which has no clear sense (8) D reads कर्माक्रमात्, which is not correct (9) D has त्रिपञ्चकम् (10) D reads पञ्चैव च, which is incorrect (11) D reads यदावशिष्ट K reads यद्यवशिष्ट *which seems to be incorrect* (12) *This sloka is not found in D*

प्राग्वल्लिप्तान्निवर्णानि[1] सुराया सेचयेन्मुहु[2] ।
आवर्त्तितानि बहुधा[3] कुर्य्यात् कुक्कुवराटकैः[4] ॥ ६६ ॥
सर्ज्जिका[5]सिन्धुदत्तैव वपेत् कर्म्मसु[6] योजयेत् ॥ ६७ ॥
रसकस्य पलैकं तु[7] हेममाक्षिकसंयुतम् ।
सैन्धवस्य पलार्द्धं तु मातुलुङ्गाम्ल[8]संयुतम् ॥ ६८ ॥
पाचनं कारयेत् पश्चात्[9] प्रातं[10] कुङ्कुमसन्निभम् ।
इन्द्रगोपसमं[11] कल्कं पुटयोगेन जारयेत्[12] ॥ ६९ ॥
तत् कल्कं मधुसंयुक्तं शर्कराटङ्कणान्वितम्[13] ।
एकीकृत्याथ संमर्द्य[14] गव्यक्षीरेण[15] पाचयेत् ॥ ७० ॥
प्रागेव शोधितं शुल्वं रसकल्केन[16] रञ्जयेत् ।
रञ्जयेत् त्रीणि वाराणि जायते हेम शोभनम् ॥ ७१ ॥
भावयेन्मुनिपुष्पाणि करवीरं मनःशिलाम्[17] ।

---

(1) प्रग्विशिष्टानि वर्णानि, a variant in D (2) D reads सेचम सुह, which is not grammatical (3) प्रावर्तितानिप्रिलतुर्यांमां, an incorrect variant in D (4) कुर्यात् कुधराटकै, an incomplete charana in D (5) D reads सार्पिका which seems to be an error of the scribe (6) D reads कर्म च, which is not grammatical (7) D reads फलैक तु, which is incorrect (8) K reads मातुलिङ्गाम्ल. (9) K has only कथयेत् पश्चात् (10) K reads सुत, which has no sense (11) K reads इ द्रगोपसमा, which is incorrect (12) K reads जायते (13) D reads erroneously शर्कराटङ्कणान्विताम् (14) एकीकृत्वा सुत मर्द्यं, an incorrect variant in D (15) D has गवाक्षीरेण, which is incorrect (16) D reads रजकल्केन, which is incorrect. (17) करवीरमन शिला, a variant in D

तत्पूर्व्व रञ्जित[1] शुल्व शिलया च तथा युतम् ।
अन्धमूषागत[2] ध्मात जायते हेम शोभनम् ॥ ७२ ॥
तेनैव रसकल्केन तारपिष्टि तु कारयेत् ।
सेचयेत् काङ्गुणीतैले तद्दिव्य[3] कनक भवेत् ॥ ७३ ॥
अर्ज्जुनी लाङ्गली पद्मचारिणी[4] शक्रवारुणी[5] ।
सुवर्णा[6] चौषधीभिश्च गैरिकेण तु पार्व्वति ।
विलिप्त शुल्वपत्र तु निषिक्त कनक भवेत् ॥ ७४ ॥
मयूरग्रीवतुत्थञ्च[7] कुङ्कुम रसक तथा ।
बालवत्सपुरीष च विष हालाहल तथा ।
रक्तचित्रकचूर्णञ्च[8] समभागानि कारयेत् ॥ ७५ ॥
मर्द्दयेन्मध्यमाम्लेन छायाशुष्क च कारयेत् ।
मधुना सह सयोज्य[9] नागपत्राणि लेपयेत् ॥ ७६ ॥
मूकमूषागत[10] ध्मात नाग रञ्जयति क्षणात् ॥ ७७ ॥

(1) ततपूर्वरञ्जित a var ant in D (2) D and K read अधमूष गत which is not correct (3) K reads त दिव्य wh ch is not correct (4) D reads लाङ्गली पद्मवारुणी K reads पद्मचाङली wh seems to be incorrect (5) B reads शक्रवाकणि which is incorrect (6) D reads सुरवण wh ch is incorrect K reads सुवर्णे (7) D h तुत्थ च wh ch s incorrect (8) D reads वर्णे तु wh ch seems to be incorrect K has तु instead of च (9) मधुमाक्षिकसयुज्य a var ant in B wh ch has no clear sense मधु सहन कोज्य an incorrect variant in D K reads सयोज्य (10) D and K read मूकमूख गत wh ch is ncorrect

शाकपत्र[1]रसेनैव सप्तवारं निषेचयेत् ।
अष्टाविंशतिकृत्वो वा[2] तैले भूनागसम्भवे ।
तन्नागं[3] जायते दिव्यं देवाभरणभूषणम् ॥ ७८ ॥
अथवा भूलताचूर्णं[4] नागचूर्णं समांशकम् ।
अन्धमूषागतं ध्मातं तैले तप्तं[5] निषेचयेत् ॥ ७९ ॥
एवं कृते सप्तवारं भवेत् षोड़शवर्णकम् ॥ ८० ॥
बालवत्स[6]पुरीषं च लाक्षागैरिकचन्दनम् ।
हंसपादाख्यदरदं[7] विल्वमज्जा गुड़स्तथा ॥ ८१ ॥
राजावर्त्तं च कङ्कुष्ठं शाक[8]पल्लववारिणा ।
भुजङ्गं कनकं कुर्याच्छतवारं निषेचनात्[9] ॥ ८२ ॥
मञ्जिष्ठा रजनीद्वन्द्वं कांची कनकमाक्षिकम्[10] ।
कौसुम्भं विषसिन्धूत्थं[11] दरदं रक्तचन्दनम् ॥ ८३ ॥
शाकपल्लवपालाश-कुसुमैः सह संयुतम् ।
सेचनाच्छतवारेण[12] नागं रञ्जयति प्रिये ॥ ८४ ॥

---

(1) D and K read चशोकपत्र (2) K reads वै. (3) B and K have त नाग, which is grammatically incorrect (4) B reads भूलताचूर्णे, which is incorrect (5) B reads तैलतप्त D reads तैले तप्त K reads चन्धमूषागत तैले तप्त तप्तं (6) D reads erroneously बालवैत्र (7) हंसपादाख्यदरद, a variant in D (8) B reads शोक, which seems to be incorrect. (9) D has शतवाराणि शिंचयेत् K has शतवाराणि सेचयेत् Both the readings are incorrect (10) कांचि वसुहकमाक्षिकम्, a variant in D K has only कांचिकं (11) B has सिंधुत्थ, which is incorrect. (12) This charaṇa is wanting in K.

काङ्कुष्ठं गन्धपाषाणं[1] रजनीद्वितयं तथा ।
भावयेत् सप्तवारांश्च चामीकररसेन तु[2] ॥ ८५ ॥
निषिक्तं शिग्रुपातैले[3] सप्तधा प्रतिवापितम्[4] ।
नागं रञ्जति च[5] क्षिप्रं रञ्जितं चाक्षयं भवेत् ॥ ८६ ॥
विद्रुमं दरदं तीक्ष्णम् घनेन[6] प्रतिवापितम् ।
मञ्जिष्ठाकिंशुकरसे शाके चैव निषेचयेत्[7] ॥ ८७ ॥
प्रतिवापनिषिक्तश्च[8] क्रमेणानेन रञ्जितः[9] ।
भुजगो[10] हेमतां याति नात्र कार्या विचारणा[11] ॥ ८८ ॥
उक्तं हेमदलं[12] देवि वरं तारदलं[13] शृणु ॥ ८९ ॥
श्वेताभ्रं काञ्जिके स्विन्नं[14] त्रिवारं पुटितं ततः ।
खल्पटङ्कणवङ्गं च शुद्धशुल्वे तु वापयेत्[15] ॥ ९० ॥

---

(1) B and K have गन्धपाषाण (2) K reads शाकवृक्षरसेन तु (3) D reads तैले. (4) D reads erroneously प्रतिवापिता (5) नाग रञ्जयते is the reading in B. नाग रञ्जति is the reading in D This hemistich and the next one are not found in K (6) D reads घनेन (7) K reads erroneously निषेचयेत्. (8) D reads निषिक्त च K has विद्रुम before प्रतिवापनिषिक्त च, which is incorrect. (9) क्रमेणानेन रञ्जयेत्, a variant in D (10) K reads भुजगो (11) K reads विचारणात्, which is incorrect (12) D has सिक्त हेमदले K has रक्तहेमदल Both सिक्त and रक्त are absurd (13) D reads सित तारदल, which is not correct (14) B has स्विन्नं काञ्जिके स्विन्न is the variant in D (15) D reads पङ्कदलेन, K reads वापयेत्

पञ्चमांशेन मिश्रं तत्[1] तारं ताले च वेधयेत्[2] ।
तत्ताल[3] मेलयेत्तारे द्रुतं सिक्तेन[4] वेधयेत् ॥ ८१ ॥
रससैन्धवमेकैकं तिलसर्ज्जी[5]द्वयं द्वयम् ।
टङ्कैकं कनकरसे[6] मर्दयेद्दिवसत्रयम् ॥ ८२ ॥
तेन लिप्तं ताम्रपत्रं[7] धमेदावर्त्तितं[8] पुनः ।
इङ्गुद सतालमूल[9] दध्यम्लेन तु पेषयेत् ॥ ८३ ॥
तन्मध्ये ढालयेच्छुल्वं सप्तवारं[10] दलं भवेत् ।
तृतीयांशेन वोजस्य मेलयेत् परमेश्वरि[11] ॥ ८४ ॥
लाङ्गली चित्रको दन्ती ह्ययश्चोत्तरवारुणी[12] ।
गोधावती वज्रवल्ली[13] श्वेतार्कः शक्रवारुणी[14] ॥ ८५ ॥

---

(1) पञ्चमांशे धन तारं, a variant in D. K has only पञ्चमांशेन धन (2) तारबद्ध तु वेधयेत्, a variant in B तार ताल च वम्बयेत् a variant in D. K has तार बद्ध च वेधयेत्, (3) B has तद्दले. D has तत्तार (4) B reads द्रुता सिक्तेन D reads द्रुत सिक्तेन Both are incorrect (5) B reads सिवासर्जि (6) D reads कनक रसे, which is incorrect (7) B has ताम्र पत्रं D has ताम्रपात्र Both are incorrect. (8) D reads धमेद्यावित्तिता, which has no clear sense (9) इङ्गदीमूलतालमूल, a variant in B. इङ्गदीसतालमूल, a variant in D इंगुदिसतालमूल a variant in K. (10) K reads शतवार (11) D has only परमेश्वरि out of this hemistich (12) D reads इह्युत्तरवारुणी, which is incorrect (13) B reads गोधापत्री, which is not correct D has गन्धवधवल्ली च , K has गोधावर्तो वल्ली Both are incorrect and incomplete. (14) B reads शतवारुणी D reads श्वेतार्क, which is incorrect.

विष्णुक्रान्ताश्वगन्धा च[1] शिग्रुपञ्चाङ्गुली तथा ।
पुनर्नवा ह्यपामार्ग इङ्गुदी[2] चक्रमर्दकः ॥ ८६ ॥
गुडची चैव हिस्रा च[3] एकद्वित्रिचतुर्थकः[4] ।
महिषीक्षीरसन्धानात्[5] समाहादुपरि प्रिये[6] ।
निषेके क्रियमाणे तु[7] जायते शुल्वशोधनम्[8] ॥ ८७ ॥
तार[9]षोडशभागेन शुल्वपत्राणि लेपयेत् ।
स्थापयित्वान्धमूषायां[10] त्रिधा चावर्तयेत् पुनः[11] ॥ ८८ ॥
शुक्लवर्गस्त्रिधा चारं[12] गङ्गसैन्धवसञ्ज्ञिकाः ।
दन्ताः कपर्दा कम्बुच[13] शुक्तयः शुल्ववापना[14] ॥ ८९ ॥

---

(1) विष्णुक्रान्ता चाश्वगन्धा, a variant in B विष्णुक्रान्ता च गन्धा च a variant in D (2) D reads शिरु च, which is incorrect (3) गुडूची च वधहिंसा च, a variant in D (4) B reads चतुर्थया (5) D reads सधाता which is incorrect. (6) D has समाहात् परियोजयेत् K has समाहादुपरी योजयेत् (7) क्रियमाणे जायते तत्, a variant in D. निषेके क्रयमाणे तु a variant in K. Both the readings are incorrect. (8) D reads शुल्व शोधन परम् which mars the metre (9) B reads तारं D reads स तु K wants this term (10) स्थापयित्वा त्रिधा यावर्त्, a variant in D K reads स्थापयीत्वांधमूखायां, which is incorrect (11) D has तावद्वन्धन तत् पुन, which is incorrect K has त्रिधा सवर्तयेत् पुन (12) शुक्लवर्गसुधाचार, a variant in B शुल्व वह त्रिधा चौर, a variant in D शुक्लवर्गत्रिधाचार, a variant in K. (13) B reads कम्बुय D reads दन्ता कापर्दि कम्बु च. K reads कपर्दि (14) B has शुल्वस्य शुल्वदापन D has शुक्ल य शुल्वपावनम K has only शुल्ववापन

पादमेतत्सुरासेके[1]र्जायते नखपाण्डुरम् ॥ १०० ॥
चयोऽयस्कान्तभागा:[2] स्युरारतारद्वयं तथा ।
वङ्गस्य[3] दश भागा: स्युस्तारवेधेन[4] वेधयेत् ॥ १०१ ॥
आरस्य द्विगुणं तारं तारात् कान्तं चतुर्गुणम् ।
कान्तादष्टगुणं[5] वङ्गं तारवेधेन वेधयेत्[6] ॥ १०२ ॥
तालं सूतं समं कृत्वा वज्रीचोरेण मर्दितम् ।
पुटं दत्त्वा तु यन्त्रेण सत्त्वं पतति शोभनम् ॥ १०३ ॥
वङ्गमावर्त्य देवेशि वज्रीक्षीरेण[7] पेषयेत् ।
एकविंशतिवाराणि वङ्गशोधनमुत्तमम् ॥ १०४ ॥
तद्वङ्गं जारयेत् सूतं[8] समं वा[9] द्विगुणादिकम् ॥ १०५ ॥
भल्लातराजिकातैल[10]-शङ्खचूर्णविड़ेन च[11] ।
नागवल्ली भवेत्तेन समं वङ्गेन सारणात्[12] ॥ १०६ ॥
क्षारोदकनिषेकाच्च[13] तद्वीजमनेकधा[14] ।

---

(1) यदातमसुरां सेके, a variant in B पादमेनू यसेकेक, a variant in D पादमेतत्सुराकेकं, a variant in K. (2) D reads चयोकान्तस्य भागा स्यात्, *which is incorrect. K reads चयो भाक्तमागा स्यु* (3) *B reads वङ्गस्य,* (4) K reads तारवधेन (5) D has कान्ताद्दुगुण (6) B has तारं वेधेन वेधयेत् D has तारवधीन वेधयेत् K has तार वधेन वेधयेत्. (7) K reads चक्रंचोरेण. (8) B reads जार्यते सूते, which is incorrect D reads जायते सूतं, which is also incorrect (9) D and K read सम्-*सम* (10) *D has भल्लातराजितैलं, an incomplete chtracs* K has भल्लात राजिकातैल (11) B reads विड़ानि, D reads विड़चनम् (12) D and K read मारयेत् (13) K has चोरोदकनिषेकाच wh ch seems to be incorrect (14) वढचिवरेकव, a variant in D, wh ch is senseless

तमुपायं प्रवक्ष्यामि मार्दवं येन जायते ॥ १०७ ॥
घृतं दधि पयः[1] क्षौद्रं बिल्वजम्बीरकद्रवैः[2] ।
गुडस्तिलसमायुक्तो[3] निषेकात्[4] मृदुकारकः[5] ॥ १०८ ॥
गजदन्ता हयनखा[6] मेषशृङ्गं च सैरिभम्[7] ।
कम्बु[8]निर्यासयुक्तं सप्तवारं निषेचयेत्[9] ॥ १०९ ॥
सहस्रधा विस्फुटितं दलं भजति[10] मार्दवम् ॥ ११० ॥
ज्योतिष्मतीकुसुमभानां[11] तैले कारञ्जकेऽपि वा[12] ।
निषेकं सहते[13]ऽत्यर्थं कनकस्य विचक्षणैः ॥ १११ ॥
आवर्त्यमानं तारे च[14] यदि तन्नैव[15] निर्मलम् ।
काचटङ्कणयोगेन क्षिप्रं निर्मलतां व्रजेत् ॥ ११२ ॥
मधुक[16]मधुमेषाज्य सौराष्ट्रीगुडसैन्धवैः[17] ।

---

(1) B reads घृतदधिमधु (2) किणजम्बीरकदलि, a variant in B (3) गुडतैलसमायुक्त, an incorrect variant in D (4) D and K read चापयेत् (5) D has मृदुकारकम् K has मृदुकारके (6) B reads हयनखो (7) मङ्ग चैव सैन्धव an incomplete charana in D मेषोष्ट्र च सैंधव, a variant in K (8) D and K read कङ्कु which seems to be incorrect (9) D reads सप्तवाराणि सेचयत् (10) D has सहस्रधा वस्फटिते दले भवति K has सहस्रधा च स्फुटते दल भवति (11) ज्योतिर्मत्सुमानां, an incomplete charana in B. (12) कारञ्जिकेऽपि च a reading in D (13) K reads सास्यते. (14) B reads तारेण K reads ततारे (15) D reads त मैव which is incorrect (16) B D and K read मधुक, which is not accurate (17) D reads गुडमैन्धव

शुक्तिकम्बुखुरावापं[1] चन्द्रार्कं मृदु जायते ॥ ११३ ॥
मधुतैलघृतैश्चैव[2] वत्समूत्रे निषेचनात्[3] ।
जायते खरसत्त्वानां दलानामपि मार्दवम् ॥ ११४ ॥
चिञ्चारसेन सामुद्रैः क्षीरे चार्कस्य[4] वह्निना ।
विशुद्धं जायते तारं गङ्गकुन्देन्दुसन्निभम् ॥ ११५ ॥
यदि तन्निर्मलं[5] नैव तदा[6] तद्वत् पुनः पचेत् ।
विधिरेष[7] समाख्यातस्तारकर्म्मणि पूजितः ॥ ११६ ॥
कङ्गुणी[8]तैलमञ्जिष्ठा-हरिद्राद्ययकुङ्कुमम् ।
निषेकात् कुरुते हेम बालार्कसदृशप्रभम् ॥ ११७ ॥
शुल्वार्द्धं गन्धकं दत्त्वा तदर्द्धं मृतसूतकम्[9] ।
चाङ्गेरी[10]स्वरसेनैव मर्द्दयेद्वासरत्रयम् ॥ ११८ ॥
मृतं[11] चित्ररसेनैव लेपयेद्धेम पाण्डुरम् ।
पक्त्वा[12] पञ्चमृदा देवि हेमोत्कर्षणमुत्तमम् ॥ ११९ ॥

---

(1) सिक्तमश्वमखुरावाप, a variant in D. सुक्तिकचुखुरावाप, a variant in K. (2) मधु तैल घृत चैव, a variant in D मधुतैलघृत चैव, a variant in K (3) वत्स्याभिय निषेचयेत्, a variant in B वत्समूत्राणि सेचनात्, a variant in D Both the variants have no clear sense (4) D reads चौर वार्कस, wherein the first term is incorrect. (5) B and D read स निर्मल which is incorrect (6) D reads तत्र (7) D reads erroneously विधिरेषा K reads विधिरेव. (8) K has कङ्गुणि (9) B has मृतपारद which seems to be incorrect (10) B reads शाङ्करी, which appears to be incorrect (11) D reads प्रवित which mars the metre (12) D and K read क्वथि

हेम शुल्व तथा तीक्ष्ण समभागानि कारयेत् ।
अन्धमूषागतं[1] ध्मातं खोटो भवति तत्क्षणात् ॥ १२० ॥
खोटस्य भागमेकं तु रसहेमसमन्वितम् ।
पाचयेदनुजाम्लेन[2] यावत् कुङ्कुमसन्निभम् ॥ १२१ ॥
शताशेन तु तेनैव वेधयेद्धेम पाण्डुरम्[3] ।
जायते कनकं दिव्यं द्विवर्णोत्कर्षणं[4] भवेत् ॥ १२२ ॥
यावच्छुद्धं भवेत्तावत् पुटेल्लवणभस्मना[5] ।
रक्ततैले[6] निषेकाच्च जायते हेम शोभनम् ॥ १२३ ॥
मर्दितं कटुतैलेन[7] स्वर्णगैरिकगन्धकम् ।
अथवा मातुलुङ्गाम्ले[8] राजावर्त्तकमाक्षिकम् ॥ १२४ ॥
अथवा विट् कपोतस्य[9] राजावर्त्तकसैन्धवम् ।
पुटनाच्छ्वेतकनकं[10] कुरुते[11] कुङ्कुमप्रभम् ॥ १२५ ॥
राजावर्त्तस्य चूर्णं तु शिरीषकुसुमद्रवे[12] ।

---

(1) D and K read च धमूखागत which is not correct (2) पाचये दनुजाम्लेन a variant in D [दनुज may mean मनुज] (3) वेधयत् पत्रपाण्डुरम् a variant in D (4) This charaṇa and the next three are not found in D K reads द्विगुणोत्कर्षण (5) B reads भवता which is incorrect (6) K reads रक्त तैले (7) सप्त दुतैलेन सिक्त, a variant in D, which is senseless (8) K reads मातुलिङ्गाम्ले (9) D has विट्मात्रस्य (10) K has पु त श्वेतकनक which is incomplete as well as incorrect (11) K reads कायते which is not proper (12) शिरीषकुसुमोदके an incorrect variant in K

भावितं बहुश. चिमसप्तधीत्यंशेन[1] वर्णद. ॥ १२६ ॥
शतश: कङ्गुपीतैले ताम्रं ह्वेत्वा समं द्रुतम्[2] ।
माचिकेन क्षतावापं शतांशेन तु वर्णकृत्[3] ॥ १२७ ॥
कार्पासवीजदरद[4] तुत्थसैन्धवगैरिकै:[5] ।
पवालक्तक[6]मञ्जिष्ठा-रक्तचन्दनविद्रुमै:[7] ॥ १२८ ॥
गुडभल्लातकस्नेह[8] वत्सविष्ठेष्टकायुतै.[9] ।
आवापाज्जायते श्वेतं[10] कनकं रविसन्निभम्[11] ॥ १२९ ॥
रक्ताष्टकं त्रयो भागा[12] त्रयो भागा. समुद्रजम्[13] ।
सितार्कपत्रतोयेन[14] पुटो वर्णप्रदो भवेत्[15] ॥ १३० ॥

---

(1) B reads चिप्रसप्तधीत्यंशेन D reads चिप्तसप्तधीत्यशात् K reads चीप्र सप्तधीत्यशात्, which is incorrect. (2) तानह्वेत्वासमद्रुत a variant in B ताम्रे ह्वेत्वा रसे घृत, a variant in D, which is not correct (3) D reads the whole hemistich thus माचिकेन शतांशेन तुत्थवापनद्रवेत्, which is partly incorrect K wants क्षता। (4) B and D read कार्पासवीज दरद. (5) D reads तुत्थसैन्धगैरिक, which is incorrect. (6) D reads पवकन्दैन K reads पवालजक (7) D and K read मिन्दिते instead of विद्रुमै. (8) गुड भल्लातकस्नेह a variant in D (9) चमविष्टाष्टकायुतै, a variant in D. वत्सष्टेष्टकायुतै, an incomplete variant in K. (10) B reads ईवि D reads श्वेह (11) B has रवि सभम, D has विद्रुमप्रभम् (12) B has रक्तेष्टक D has काकविट् पराभविट् चैव K reads सरक्ताष्टकत्रयो भागा (13) B has सामद्र। योनयो हित K has सामुद्र योजयेदिच Both the readings are unintelligible (14) सिताकंपत्रतयेन, a variant in D (15) पुटवर्णप्रदापयेत्, an incorrect variant in D

रक्तपीतौ[1] समौ कृत्वा ताभ्यां तुल्यं च[2] माक्षिकम् ।
करञ्जतैलेनालोड्य मूकमूषागतं[3] धमेत् ॥ १३१ ॥
सकृत् पीत[4]दशांशेन दश पीतशतेन च[5] ।
शत पीतसहस्रेण[6] कोटिमर्द्धेन विध्यति[7] ॥ १३२ ॥
शतश किंशुकरसे भावित[8] लवण पुन ।
सटङ्कणपुटेनैव[9] वर्णोत्कर्षप्रद[10] भवेत् ॥ १३३ ॥
लोहचूर्ण[11] त्रयो भागा गैरिकं द्विगुणं तथा[12] ।
मधुकङ्कुसुदाभोभि [13] मूत्रेणापि निषेचयेत्[14] ॥ १३४ ॥
पेषयेत् कोद्रवेणैव[15] गोष्ठमध्ये[16] तु निक्षिपेत् ।

---

(1) D has रक्तपित्तौ (2) D reads तुल्य च which is incorrect (3) B reads चयमूषागतं D and K read मूकमूखागत wherein the middle term is incorrect (4) D reads पाद (5) दद्यात् पीतेन च पृथक् a variant in D (6) शतपीत च सप्तेन a variant in D शतपीतसहस्रैना a variant in K, which is incomplete (7) B reads कोटिमध न विध्यति D reads कोटिमूर्धेन तिष्ठति K reads कोटिमर्ध न तिष्ठति (8) D reads erroneously भवेत्ता (9) सटकण तु पुटनात्, a variant in B (10) D and K read वर्णोत्कर्षप्रद which is not correct (11) *D reads* लोघचूर्ण (12) *गैरिका द्विगुणस्य च a reading in B* गैरिका द्विगुणाय च a reading in D गैरिकं द्विगुणस्य च a reading in K All are inaccurate (13) मधुककुसुमायाभि, a variant in B मधुकुन्देन कुन्दाभो a variant in D मधुक टैलक दाशो a variant in K All are partly incorrect (14) B reads च पेषयेत् K reads च वेषयेत् which is incorrect (15) पेषयेन्द्रवणैव a variant in D पेषेद्रत्नद्रवेनैव, a variant in K (16) D reads गोष्पमध्य

अशीत्यंशेन तदिदं[1] वापाद्वर्णप्रदं भवेत् ॥ १३५ ॥
शुल्वातिरिक्तं कनकं[2] पुटयेदन्धमूषया[3] ।
सामुद्रधातुतोयेन निषेकः शस्यते तदा[4] ॥ १३६ ॥
सामुद्रगैरिकालिप्तं[5] द्रावितं[6] मृदुतां व्रजेत् ।
गोशकृद्भस्मलिप्तं तत्[7] समभागं प्रलेपयेत् ॥ १३७ ॥
शुल्वातिरिक्तं कनकं[8] पुटं निर्मलतां व्रजेत् ॥ १३८ ॥
नागास्थिभस्मकल्केन मूषा लिप्ता विचक्षणः ।
निक्षिपेदन्धमूषायां[9] नित्यं हेमदलं भवेत् ॥ १३९ ॥
ततस्तन्मृदुभिर्घोटैः[10] सम्प्रसार्य्य विचक्षणः ।
तप्ततप्तं[11] निषेक्तव्यं यावत्तन्मृदुतां व्रजेत् ॥ १४० ॥
सामुद्र[12]धातुकल्केन लेपयित्वा विचक्षणः ।
कृत्वा पलाशपत्रे[13] तु तद्दहेन्मृदुवह्निना[14] ॥ १४१ ॥

---

(1) D reads साविद K reads सदीद Both are incorrect (2) शुल्वातिरिक्तकनक a reading in D शुल्वाति नक्त कनक, an incorrect reading in K (3) पुटे देयान्धमूषया a variant in D K reads मूखया, which is incorrect (4) D has an incomplete reading—रबीक शस्यते दा (5) समुद्र गैरिकालिप्त, a variant in D सामुद्र गैरिक लिप्त a variant in K. (6) D reads erroneously द्रावयित्व (7) D reads गोशकृद्भस्मगलित. K reads लिप्तं च (8) D reads शुर्णके, which is senseless (9) वापयद्धमूषायां a variant in B * (10) D and K read मृदुभिर्घटिकै सम्यक (11) B reads तप्त तप्त This hemistich and the next one are not found in D (12) K reads सामुद्र (13) D reads पक्वपत्रे K reads पान्नागपत्रे (14) D has तद्देत दद्दवह्निना which is incorrect

तावत् पचेत् पचेद्धीमान्[1] यावन्निर्मलतां व्रजेत् ।
ततस्तच्छीतले[2] कृत्वा तोये निर्वापयेत्ततः ॥ १४२ ॥
[तावदेव[3] विधिः कार्य्यो यावद्वर्णः समागतः ॥ १४३ ॥
ततस्तत्तापयेद्भूयो गोमूत्रचूर्णसंयुतम् ।
गतं तपनतस्तत्र लवणे प्रक्षिपेद्बुधः ॥ १४४ ॥
प्रकृष्टं तु ततो हेम पचेल्लवणगैरिकैः ।
कर्षकेण तु संशोध्य भूयो भूयो विचक्षणः ॥ १४५ ॥
लेपयेत् पुटयेच्चैव वर्णसंजननाय च ।
तारारिष्टं तु देवेशि रक्ततैलेन पाचयेत् ॥ १४६ ॥
निषेचयेच्च शतशो दलं रज्यति रञ्जितम् ॥ १४७ ॥
रसोपरसवर्गं तु निर्वहेन्नागवङ्गयोः ।
नागवङ्गौ पुनः शुल्बे शुल्बं तारे तु निर्वहेत् ॥ १४८ ॥
तारं निषिक्तं देवेशि रक्ततैले पुनः पुनः ।
जायते हेम कल्याणं सर्व्वदोषविवर्ज्जितम् ॥ १४९ ॥
हेमार्द्धेन समायुक्तं रसोच्छिष्टं प्रशस्यते ।
जायते कनकं दिव्यं मातृकासमसुत्तमम् ॥ १५० ॥
वङ्गाभ्रं सितताप्यं वा शैलं वा वापयेत् सिते ।
तद्धि तारे दशांशेन वर्णोत्कर्षप्रदं भवेत् ॥ १५१ ॥
षट्नवतिरंशास्तु ताराटिस्य पार्व्वति ।

(1) तावद्विषयतो विद्यात्, a variant in D तावद्विषये विद्यात् an incomplete variant in K (2) ततश्च्छीतलं, a reading in K (3) The portion within brackets (143—152) is found only in B

एकैको रसहेमांशः शतवेध इति स्मृतः ॥ १५२ ॥]
अनेन क्रमयोगेण सहस्रांशेन वेधकः[1] ॥ १५३ ॥
मूषां[2] तु गोस्तनीं कृत्वा दलपूर्णां तथा दृढाम्[3] ।
धमेद्दलं निर्मलं तत्[4] घृतमुन्मीलितं यदा ॥ १५४ ॥
क्रामणेन समायुक्तं रसं दत्त्वा तु वेधयेत् ।
दलपत्रं रसालिप्तं ताम्रपात्रान्तरे[5] स्थितम् ॥ १५५ ॥
उपरिष्टान्मृदा लिप्तं दत्त्वा मृद्वग्निमेव च ।
बीजसंयुक्तमावर्त्य स्थापयेन्मतिमान् सदा ॥ १५६ ॥
टङ्कणं तिलचूर्णं च शीतले तु निवापयेत्[6] ।
रससिद्धं तु[7] कनकं यत्नेन स्थापयेद्भुवि ।
उद्धृत्य पुनरुद्घाट्य[8] विक्रेयं तत् सुरेश्वरि ॥ १५७ ॥
पुनरन्यं प्रवक्ष्यामि रसवेधो[9] यथा भवेत् ॥ १५८ ॥
तिलसर्षपचूर्णस्य द्वे पले च प्रदापयेत्[10] ।
द्वे पले च हरिद्राया एकत्रैव तु मर्दयेत्[11] ॥ १५९ ॥

(1) B has सहस्रांशादिवेधक. D has सहस्रांशेन विधायक, which is incorrect (2) D and K read मूखां, which is incorrect. (3) दल पूर्णं तथा दृढ, an incorrect variant in D. (4) D and K read च. (5) B reads ताम्र पात्रान्तरे. K reads ताम्रपत्रान्तरे, which is incorrect. (6) D reads शीतलेन तु वेधयेत् K reads शितलेन निवापयेत्, which is partly incorrect (7) D reads रसे सिद्धे तु, which is incorrect K reads रस सिद्ध तु (8) D reads पुनरुद्यम, which is unintelligible K reads पुन रुद्घाट्य. (9) B reads रसवेधा D and K read रसवेध Both are incorrect. (10) D and K read द्वे पले च हरिद्रया, wherein the last term is incorrect (11) This hemistich is not found in D and K

मर्द्दयेन्मृण्मये पात्रे पलपञ्चक[1]पन्नगम् ।
वापयेत् सिद्धसूतेन[2] शलाका चैव चालयेत्[3] ॥ १६० ॥
पुनश्च वापयेत्तावत्[4] यावत् कठिनतां व्रजेत्[5] ।
सन्नागं जायते दिव्यं जाम्बूनदसमप्रभम्[6] ॥ १६१ ॥
उद्घाटं[7] कथयिष्यामि रसविद्ध च पन्नगम्[8] ॥ १६२ ॥
घोषाकृष्टं तु यत् शुल्वं[9] षोडशांशेन[10] योजयेत् ।
एकीकृत्य[11] समावर्त्त्य छागमूत्रे निषेचयेत् ।
सर्व्वदोषविनिर्म्मुक्तं जायते हेम शोभनम्[12] ॥ १६३ ॥
लोहवेध इति ख्यातो विस्तरेण सुरेश्वरि ॥ १६४ ॥
यथा लोहे तथा देहे कर्त्तव्यः सूतकः सदा ।
समानं कुरुते देवि प्रविशन्[13] देहलोहयोः ॥ १६५ ॥

---

(1) D reads पलं पञ्चक K reads पलं पञ्चक (2) दापयद्रसमूर्छेन, a variant in D K reads बद्धसूतेन (3) D reads शलाकां चालयेत्, which is incorrect (4) B reads यथा D reads पवादापयद्रविड an incomplete variant in D (5) K has the following hemistich after व्रजेत् —संवापयद्रविडं तु यावत् कठिनतां व्रजेत् (6) D reads जम्बूनद समप्रभम् which is not correct (7) उद्घाट is the readings in D (8) D has रससिद्धिं च पावनम् K has रसवेध च पन्नगं (9) D reads शुल्क न् which is incorrect. (10) K reads erroneously षोडशांश (11) D and K read एकीकृत्वा which is grammatically incorrect (12) D has सम शोभनम् which is incorrect (13) D read प्रविशन K reads प्रवदन

पूर्वं लोहे परीक्षेत ततो[1] देहे प्रयोजयेत् ।
तत्समाचक्ष्व देवेशि किमन्यच्छ्रोतुमिच्छसि ॥ १६६ ॥

इति श्रीपार्वतीपरमेश्वरसंवादे[2]
रसार्णवे रससंहितायां
लोहवेधो नाम[3]
सप्तदशः पटलः ॥ १७ ॥

---

(1) D reads erroneously यतो (2) B wants this line (3) D and K have लोहविधानो नाम This is not correct, as we see in the beginning of the next पटल लोहवेध &c and not लोहविधान

## षष्टादश. पटल. ।



श्रीदेव्युवाच ।

लोहवेधास्त्वया देव यदर्थमुपवर्णिता.[1] ।
त देहवेधमाचक्ष्व येन स्यात् खेचरी गति [2] ॥ १

श्रीभैरव उवाच ।

प्रथम शोधयेद्देह पश्चात् कल्प समाचरेत् ।
अन्यथा न[3] भवेत् सिद्धि रसे चैव रसायने ॥ २
प्रात प्रात पिबेदादौ त्रिदिन घृतसैन्धवम्[4] ।
केतक्या[*] स्तनज[5] क्वाथ तदनु[6] त्रिदिनं पिबेत् ॥
विधिना स्वेदन कृत्वा सयवचारशर्करम्[7] ।
त्र्यह पिबेद्दशक्वाथ[8] सदेवासुरवन्दिते[9] ॥ ४ ॥
क्वाथ[10] कटुकरोहिण्या सम्यक् जाते विरेचने[11]
त्रिदिन यावकान्न च[12] भुञ्जीत घृतसयुतम् ॥ ५ ॥

---

(1) लोहवेधास्त्वया देवि यदर्थमुपवर्णित an incorrect variant in D (2) D reads खेचरा गति which is incorrect (3) D and K read नान्यथा तु (4) D reads घृतसैन्धव which is incorrect (5) B has केतक्तिस्तनद्वे D has केतक्यास्तनज K has केतक्यास्तनज (6) B reads तदानु D reads तद्दिने (7) D reads शर्कराम् which is incorrect. (8) D has पिबेद्दतिक which is incorrect K has दशक्वाथ (9) सर्वे-षासुरवन्दिते a variant in B सुरदैवासुरवन्दित a variant in D (10) K reads क्वाथ (11) B reads विरेचन (12) B has दिन यावकान्न द

पलाशबीजजम्बुघ्न-गुड़मोदकभक्षणात् ।
कीटस्य पातनं कुर्य्यादथ काकेष्टवारिणा[1] ॥ ६ ॥
वचामरिचसिन्धूत्थ-रजनीकणनागरात्[2] ।
धात्रीगुड़विड़ङ्गाच्च परामं दिवसत्रयम् ॥ ७ ॥
एवं संशोध्य शाल्यन्नं[3] क्षीरमुद्गाम्बुयावकैः[4] ।
ततो जातबलो[5] भूत्वा चरेद्रासायनं विधिम्[6] ॥ ८ ॥
धात्रीरसघृतक्षौद्रैः क्षीरैः सुरतरुद्रवैः[7] ।
तैलं[8] निर्मथ्य देवेशि द्विचतुःषट्पलान्वितम्[9] ॥ ९ ॥
लघुमध्योत्तमैर्मानैः त्रिमासं प्रत्यहं[10] पिबेत् ।
पारोटं[11] भक्षयेत् पश्चात् जीर्णे च तदनन्तरम् ॥ १० ॥
वेधीकृत्य ततो देहं[12] ततो भक्ष्यं तु वर्द्धयेत्[13] ॥ ११ ॥

(1) This śloka is found in B only (2) D has भचच दाणनागरं. K has only त नागरात्. (3) K reads शाल्यन्न, which is incorrect. (4) क्षीरमुद्गापायकै, an incomplete variant in D. (5) जात बलो, a reading in D, which is incorrect K reads बलवलो. (6) चरेन्द्रो रै षायनविधि, an incorrect variant in D रासद्रासायनं विधि, a partly incorrect reading in K (7) D reads सतद्रवे. K reads सुरतद्रवे, which is incorrect and incomplete. (8) B reads तैल, which is incorrect. (9) द्विपतुःपलान्वित in B. द्विपटच पलान्विते in D. Both the readings are incorrect. (10) D reads त्रिमासे प्रत्यह. K reads त्रिमासे पथ्यभुक्, which is absurd. (11) "सुशोधितो रसः सम्यक् पारोट इति कथ्यते ॥"—Vide रस र Chap. XI v. 60 (12) D reads देहे (13) B reads वर्द्धयेत् D reads वेधयेत् K reads वह्न तु भक्षयेत्

शोधितं व्योमताप्याभ्यां[1] पातितं तदनन्तरम्[2] ।
तन्दुलीयकभृङ्गाह्व[3] पेषितं चापितं[4] रसम् ।
चारोटमिति सेवेत[5] प्रथमं देहसिद्धये[6] ॥ १२ ॥
अथवा भस्मतां प्राप्तं[7] षट्वारं[8] कल्कयोगतः ।
यावत् संवत्सरं पूर्णं तावद्दारोटकं भजेत्[9] ॥ १३ ॥
शिलाजतु[10]चौद्रविडङ्गसर्पि[11]
र्लौहाभयापारदताप्यभक्षम्[12] ।
आपूर्यते दुर्बलदेहधातून्[13]
त्रिपक्षरात्रेण यथा शशाङ्कः ॥ १४ ॥

---

(1) B has *शोधितव्योमताप्यां* an incomplete variant D has शोधित व्योमता पाति, which is senseless K has शोधित व्योम ताप्य भि (2) D reads त तदनन्तरम् an incomplete charaṇa (3) तन्दुलक भृङ्गाह्व in D तदुपलभृङ्गाह्व in K Both are incorrect variants (4) शोधित चाहित an incorrect reading in D K wants चापित (5) D reads चारोटमिति सवते wherein the last term is incorrect K reads सेवते (6) D reads देहसौख्ये which is grammatically incorrect K reads erroneously देहसिद्धयेत् (7) B has प्राप्त D has प्रोक्त, which is incorrect (8) B reads षड्वा (9) K reads भवेत् (10) K reads शिलाजत (11) K has विडङ्गसर्पिं D has चौद्रविडङ्ग चौद्रा K has चौद्रचौक्षकर्ष which seems to be partly incorrect (12) *लौहाभयपारदताप्यभक्षा an incorrect variant in D* (13) *आपूर्या दुर्बलदेहे धातून् an incorrect reading in D* आपूर्य दुर्बलदेहधातून् *also an incorrect reading in K*

वक्रकन्यारसचौद्र[1] हिंनिशात्रिफलागुडैः ।
कल्कीकृतं रस[2] व्योम-कान्त[3]मध्वाज्यसंयुतम् ।
भुक्त्वा गच्छेदमरता वेधीकरणमुत्तमम् ॥ १५ ॥
चूर्णमभ्रकसत्त्वस्य कान्तलोहस्य वा ततः ।
तीक्ष्णस्य वा महादेवि त्रिफलाक्वाथभावितम् ॥ १६ ॥
यावदञ्जनसङ्काशं वस्त्रच्छन्नं विशोध्य तत्[4] ।
भृङ्गामलक[5]सारेण हरिद्राया रसेन च ॥ १७ ॥
पुटितं रससयुक्तं[6] मधुघृतसमन्वितम्[7] ।
लोहसंपुटमध्यस्थं मास धान्ये प्रतिष्ठितम् ॥ १८ ॥
घृतेन मधुना लिह्यात् वेधीकरणमुत्तमम् ।
एवं वर्षप्रयोगेण[8] सहस्रायुर्भवेन्नरः ॥ १९ ॥
रससिद्धे[9] पुरा हेम गुञ्जामात्रं दिने दिने ।
भक्षयेद्देहसिद्ध्यर्थं रससिद्धिः प्रजायते ॥ २० ॥
कान्ताभ्रसत्त्व सरस मौपल्याभकजारितम्[10] ।
लिह्यादादौ समध्वाज्य[11] वेधीकरणमुत्तमम् ॥ २१ ॥

---

(1) D has वक्रण्यारि सचौद्र which is incorrect K has an incomplete charana—कण्यासचौद्र (2) D reads कल्कित सरम (3) B reads कांत (4) D reads वस्त्रच्छिन्न विशोधत, which is improper. K reads वस्त्रच्छन्ने विशोधत which is partly incorrect (5) विभागामलक is the reading in D (6) B has कॉचन घृत (7) मधुसमिश्रित तत, a variant in B (8) B reads एव वर्षप्रयोगेन (9) K reads रससिद्धे, which is grammatically incorrect (10) D and K have कांताभ्रकमृत मत्व रसमौपत् प्रयोजितम् Here रसं is m nt oned (11) लिह्यादम समध्वाज्य a var ant i 1 D and K Here रस is repeated

वर्षं वर्षार्द्धमथवा पूर्व्वमेवं[1] तु भक्षयेत् ॥ २२ ॥
वज्रजीर्णो रसो[2] देवि ह्युत्तमः[3] परिकीर्त्तितः ।
मध्यमो हेमजीर्णस्तु तारजीर्णोऽधमः[4] प्रिये ॥ २३ ॥
हेमजीर्णे भस्मसूते[5] रुद्रत्वं भक्षिते[6] व्रजेत् ।
विष्णुत्वं तारजीर्णे तु[7] ब्रह्मत्वं भास्करेण तु ॥ २४ ॥
तीक्ष्णजीर्णे धनाध्यक्षः सूर्यत्वं चपलालये तु[8] ।
वाजरे तु[9] शशाङ्कत्वम् अनलत्वं तु रोहणे[10] ।
सामान्येन तु तीक्ष्णेन शक्रत्वं माप्नुयान्नरः ॥ २५ ॥
एवं यो लोहजीर्णं तु भक्षयेद्भस्मसूतकम्[11] ।
जलेन जलरूपः स्यात्[12] स्थलेन स्थलता व्रजेत् ॥ २६ ॥
तेजोऽधिको तथा तेजः वायोरप्यधिको बली ।
कर्त्ता वर्त्ता स्वयं साक्षात् मायामुपप्रकारकः ॥ २७ ॥

---

(1) B and D read पूर्वमिव. (2) D reads वज्रधाररसो which seems to be incorrect (3) K reads उत्तम (4) B reads erroneously तारजीर्णसम D reads ताराजीर्णोधम. which is also incorrect. (5) हेमजीर्णो भस्मसूतो a variant in D हेमजीर्णो भक्ष्यन्ते a variant in K. (6) D reads भक्षित K reads भक्षितो Both are incorrect (7) B reads तारजीर्णं च D reads विष्णुत्व तारजीर्णे तु, wherein the first term is incorrect (8) B has सूर्यत्व तु चपलालये D has सूर्यत्व च चपलाले K has सूर्यत्व चपलाले (9) D reads वोजरे तु which is incorrect (10) This charana is not found in D K has अनलत्व तु मारोहणे, which seems to be incorrect (11) B reads सूतके, which seems to be incorrect (12) B has जलरूप च D has जलरूपश्च (जलरूप स)

यत्र[1] मूत्रपुरीषं तु साधकस्तु परित्यजेत्[2] ।
पाषाणो मृन्मय तत्र स्पृष्टं भवति काञ्चनम्[3] ॥ २८ ॥
प्रस्वेदस्तस्य[4] गात्रस्य लोहान्यष्टौ च वेधयेत् ।
तत् सर्व्वं कनकं नित्य[5] भक्षिते द्वादशे[6] पले ।
रुद्रतुल्यो महादेवि अजरामरकारिणि[7] ॥ २९ ॥
भस्म सूतं तथा तारं[8] भक्षयेत् षोडशं पलम्[9] ।
अथवा तारजीर्णं तु भक्षयेद्भस्मसूतकम् ।
शुल्वञ्च वङ्गघोषं च[10] तत्स्वेदात् तारतां व्रजेत् ॥ ३० ॥
अथवा[11] तीक्ष्णजीर्णं तु भक्षयेद्भस्मसूतकम् ।
मूत्रेण तस्य स्पृष्ट तु वङ्गं व्रजति[12] तारताम् ॥ ३१ ॥
एकैकेन निषेकेण[13] स्तम्भन नागवङ्गयो.[14] ॥ ३२ ॥
गुञ्जामात्र[15] रसं देवि हेमजीर्णं तु भक्षयेत् ।

---

(1) D and K read यस्य which seems to be incorrect. (2) D has साधकस्य मयोजयेत् (3) This hemistich is not found in K (4) D reads प्रवेपादाङ्ग (5) D reads शीला (6) भक्षिपेद्वादशे a variant in D (7) K reads अजरामरकारय (8) This hemistich is not found in D. (9) B reads षोडशे पले which is grammatically incorrect This hemistich is not found in D (10) This hemistich and the next one are not found in B D reads पस्तीवर्ण वङ्गघोषे K reads पस्तीच (11) D reads अन्यथा (12) B and D read भवति, which is incorrect [व्रजति is the correct reading] (13) D reads विषेकेन K reads विवेकेन Both are incorrect (14) B reads पद्मयो D reads स्तमन (15) B reads गुञ्जातान [मान]

द्विगुणं तारजीर्णस्य रविजीर्णस्य तत्त्रयम्[1] ॥ ३३ ॥
तीक्ष्णाभ्रकान्तमार्पैकं[2] गुञ्जैका द्राविका भवेत्[3] ।
वज्रमेकान्तजीर्णं तु भक्षयेत् सर्पिषान्वितम्[4] ॥ ३४ ॥
नागं वङ्गं रसं भस्म[5] विषोपविषसंयुतम् ।
मात्रायुक्तं तथैव[6] भक्षयेच्च रसायने[7] ॥ ३५ ॥
हेम तारं तथा कान्तं जायतेऽग्निसहं क्रमात् ।
बद्धश्च रसराजोऽयं देहसिद्धिं प्रदापयेत् ॥ ३६ ॥
वज्रायस्कान्तमाक्षीकं वैक्रान्ताभ्रककाञ्चनैः ।
एतैर्जीर्णैर्यथालाभं रसः शस्तो रसायने[illegible] ॥ ३७ ॥
षड्भेदोपरसायैव[9] भक्षणार्थं च वाहयेत्[10] ।
भक्षणात्तीक्ष्णजीर्णस्य[11] पलमेकं तु भक्षयेत्[12] ॥ ३८ ॥
दशवर्षसहस्राणि वज्रकायः स जीवति[13] ॥ ३९ ॥
एवञ्च द्वादशपलं तीक्ष्णजीर्णं तु भक्षयेत् ।

---

(1) B has चतुर्गुणं चतुर्जीर्णस्य, which destroys the metre (2) D has an incomplete charana—तीक्ष्णाभ्रकान्त K has तीक्ष्णाभ्रकान्तमपि (3) B reads द्रवकी D wants this charana K reads द्रावकी, which is not gram correct [illegible] (4) मदैव्य सर्पयोजितम् a variant in D K reads सर्पि योजितम्. (5) D has नागवङ्गरसायोट K has नागं वङ्गं रसं विष (6) शुद्धरुक्म हेमसह is the reading in D, शुद्धरुक्म सह is the reading in K (7) D has क्षयेत् कविरसायने K wants this charana and the next eleven ones (8) The slokes 36th and 37th are not found in D (9) षड्भेदरसायनं चैव, a variant in D. (10) B reads न वाहयेत् D reads भावयेत् (11) भक्षणात्तीक्ष्णजीर्णस्य a variant in D (12) भक्षयेत् अग्निवर्धनम् a variant in D (13) [illegible]

एव जोवेन्महाकल्प[1] प्रलयान्ते शिव व्रजेत् ॥ ४० ॥
भस्मन मुखजीर्णस्य पलैकै लक्षमायुष. ।
द्विपले कोटिरायुष्य त्रिपले ब्रह्मणायुषम्[2] ॥ ४१ ॥
चतु पले वैष्णवायु रुद्रायु पञ्चमे पले ।
षष्ठे पले च सम्प्राप्ते महाकल्प स जीवति[3] ॥ ४२ ॥
भस्मनो हेमजीर्णस्य पलेन ब्राह्ममायुषम्[4] ।
द्विपले वैष्णवायुश्च रुद्रायुस्त्रिपलेन तु[5] ।
चतु पलेन देवेशि शिवत्व प्राप्नुयान्नर[6] ॥ ४३ ॥
हेमजीर्णे भस्मसूते[7] त्रिपले भक्षिते क्रमात्[8] ।
षडशीति[9]सहस्राणि योगिन्यो बलदर्पिता.[10] ।
तस्य तिष्ठन्ति[11] किं कार्य्यं कामरूपी भवेन्नर ॥ ४४ ॥
यद्यद्भावयते रूप तत्तद्रूपधरो[12] भवेत् ।
मिते पलैकादशभि[13] हेमभस्मानि[14] भक्षयेत् ॥ ४५ ॥

---

(1) एव जीव महाकाल a variant in D (2) B reads ब्रह्मणायुत (3) This śloka is not found in D (4) This hemistich is not found in D K reads पल ब्रह्मपलायुत which has no sense (5) K reads erroneously स्त्रीपलन (6) शिवत्व समवाप्नुयात् a variant in D शिवत्वलमवाप्नुयात् a variant in K (7) D reads हेमजीर्ण भस्मसूते which is partly incorrect (8) B reads erroneously त्रिफल त्रिफलेन इति क्रमात् a variant in D (9) षडशीति is the incorrect reading in K (10) D reads बलिदायिने, which is senseless (11) K reads तिष्ठ तिष्ठति which is incorrect (12) D reads तत्तद्भावधरो (13) जीर्णे पलैकान्यभि a variant in B मिते पलैर्वा दशभि a variant in D (14) D reads हेमभस्मभि K reads हेमभस्मादि

शुक्लैकामात्रं देवेशि ज्ञात्वा चाग्निबलं निजम्[1] ।
घृतेन मधुनाच्छाद्य[2] ताम्बूलं कामिनीर्भजेत्[3] ॥ ४६ ॥
एको हि दोषः सूक्ष्मोऽयं भक्षिते भस्मसूतके[4] ।
त्रिसप्ताहं वरारोहे कामान्धो जायते नरः[5] ॥ ४७ ॥
कामिनीनां सहस्रं तु चोभयेद्दिवसान्तरे[6] ।
नारीसङ्गाद्[7]वरारोहे देहे क्राम्यति[8] सूतकः ॥ ४८ ॥
नारीसङ्गे[9] वरारोहे ह्यजीर्णं तस्य जायते ॥ ४९ ॥
मैथुनाच्चलिते शुक्रे[10] त्रिसप्ताहावधि[11] क्रमात् ।
जायते प्राणसन्देह[12]स्तस्मात्तन्मैथुनं त्यजेत्[13] ॥ ५० ॥
युवत्या जल्पनं कार्यं युवत्या चाङ्गमर्दनम्[14] ।
यस्या.[15] स्पर्शनमात्रेण रस क्राम्यति[16] विग्रहे ॥ ५१ ॥
यथा कामोऽप्युदयति[17] सुस्त्रीरूपनिरीक्षणात् ।

---

(1) D has [illegible] which is incorrect (2) D reads [illegible] which is incorrect. (3) *D reads* [illegible] *which is not correct.* (4) [illegible] a variant in D (5) D reads [illegible], which is not accurate (6) K reads [illegible] (7) D reads [illegible] which is incorrect. (8) K reads [illegible] (9) D reads [illegible], which is incorrect (10) D reads [illegible] (11) [illegible], an incorrect variant in D K has [illegible] (12) D reads erroneously [illegible] (13) [illegible], a variant in D [illegible] wherein the first term is incorrect. (14) *D reads* [illegible] K reads [illegible] Both are incorrect. (15) K reads [illegible] (16) K reads [illegible] (17) K has [illegible]

तथा[1] क्राम्यति देवेशि सूतकोऽसौ ततः[2] क्रमात् ॥ ५२ ॥
अश्वत्थपत्रसदृशो[3] भगो यस्याः समः शुभः[4] ।
तादृश्या. सुरतं[5] देवि भाजनं तु रसायने ॥ ५३ ॥
निर्मांसश्चैव दीर्घश्च भगः शुष्कशिरास्तथा ।
सदा दारिद्र्यकर्त्तारं वर्ज्जयेत्तं रसायने[6] ॥ ५४ ॥
अर्घ्येण तर्पयेन्नित्यं[7] मत्स्यमासं निवेदयेत्[8] ।
योगीन्द्रान् योगिनीर्मन्त्रैः[9] पूजयित्वा चमापयेत् ।
ककाराष्टकवर्गैस्तु[10] कट्वम्ललवणं त्यजेत् ॥ ५५ ॥
अभ्रजीर्णपलैकेन[11] व्याधिभिर्नाभिभूयते[12] ।
द्वितीये शुक्रवृद्धिः[13] स्यात् तृतीये बलवान् भवेत् ॥ ५६ ॥
चतुर्थे पलितं हन्ति[14] वलीं जयति पञ्चमे[15] ।
षष्ठे श्रुतिधरो वाग्मी सप्तमे नेत्ररोगजित्[16] ॥ ५७ ॥

---

(1) D reads तत्र (2) D reads सूतके सेवत, which is incorrect. (3) अद्युपत्रश्च यस्य, an absurd variant in D (4) यस्य भोगसम यम, an incorrect variant in D (5) D has ताद्रशांतारसौ K has तादृश्यास्तु रसो Both are unintelligible. (6) This śloka is not found in D (7) प्यादित्यान्पुने नित्य, a variant in D (8) मध्यभार्त न वेदयेत्, a variant in D (9) यामोद्रान्योगिनी मन्व, a variant in D. योगीँद्रा योगिनी मंत्र, a variant in K. Both the readings appear to be incorrect. (10) D has ककाराष्टकवर्गे तु K has ककाराष्टकवर्गे तु (11) पलमात्रप्रयोगेण, a variant in D (12) व्याधिना नाभिभूयते, a partly correct variant in D (13) K reads यकवृद्धि (14) न नाति पलितवान्, an incomplete variant in K (15) वलित जितपञ्चमे, a variant in D. वलिगजितपञ्चमे, a variant in K Both are incorrect (16) नेत्ररोगकृत्, a reading in D.

अष्टमे ताप्यदृष्टि.[1] स्यात् ब्रह्मायुर्ब्रह्मविक्रमः ।
नवपलोपयोगेन[2] सुरमेलापको भवेत् ॥ ५८ ॥
दशपलप्रयोगेण[3] द्वितीय. शङ्करो भवेत् ॥ ५९ ॥
रसवीर्यस्य रक्षार्थं बलिं दद्याद्दिने दिने ।
जपेन्मृत्युञ्जयं मन्त्र रससिद्धि प्रजायते ॥ ६० ॥
समे तु विमले जीर्णे यो रस भक्षयेन्नर.[4] ।
दशवर्षसहस्राणि स जीवेत् परमेश्वरि[5] ॥ ६१ ॥
द्विगुणे विमले जीर्णे दशलक्ष स जीवति ।
त्रिगुणे विमले जीर्णे दशकोटिं च जीवति[6] ॥ ६२ ॥
जीर्णे चतुर्गुणे देवि[7] रस खेचरता नयेत्[8] ।
ततः पञ्चगुणे जीर्णे स्पर्शवेधी[9] महारस ॥ ६३ ॥
यादृश विमले जीर्णे[10] तादृश हेम माक्षिके[11] ।
तत् फलं लभते देवि तस्य वीर्यं स जीवति[12] ॥ ६४ ॥

---

(1) ताप्यदृष्टि., a reading in D (2) नवमे पुनोपयोगेन a variant in D नवमे लोपयोगेन a variant in K (3) D reads दशमे प्रयोगेण, which is incomplete K reads दशाप्लप्रयोगेन which is incorrect. (4) रससंभक्षयेन्नर, a variant in D विमर्श भक्षयेन्नर, a variant in K (5) K reads परमेश्वर (6) This hemistich is not found in D (7) जीर्णेचतुर्गुणे देवि, a variant in D (8) This charaṇa and the next one are not found in D (9) D reads स्पर्शवेधी (10) B reads जीर्णे, which is incorrect D reads यादृशो K reads यादृशे (11) D and K read हेममाक्षिकी (12) This hemistich is not found in D and K

पुनरन्यं प्रवक्ष्यामि वज्रभस्मरसायनम् ॥ ६५ ॥
प्रथमं जारयेत्[1] सूते गन्धकं सुरवन्दिते[2] ।
दापयेत्रिगुणं तीक्ष्णं समं हेम च सूतके[3] ॥ ६६ ॥
तेनैव हेमजीर्णेन वज्ररत्नं तु[4] लेपयेत् ।
बालवत्सपुरीषेण तद्वज्रं वेष्टयेत्ततः[5] ॥ ६७ ॥
बद्धा पोटलिकां तेन पुटपाकं तु दापयेत् ।
तत्क्षणाज्जायते भस्म शङ्खकुन्देन्दुसन्निभम् ॥ ६८ ॥
तद्वज्रभस्म[6] सुभगे कारयेत् पिष्टिकासमम्[7] ।
तत्सूतगोलकरजो[8] गतदेहं[9] विमर्दयेत् ॥ ६९ ॥
पुनस्तद्गोलकरजो बालवत्सपुरीषकैः ।
मूषालेपं तु तेनैव अर्द्धांशेन[10] तु कारयेत् ॥ ७० ॥
तद्वमेदन्धमूषाया[11] मूर्च्छितं वज्रजारितम्[12] ।
फूत्काराणां सहस्रेण[13] भस्म तज्जायते क्षणात् ॥ ७१ ॥

(1) D reads जायते K reads मारयेत् (2) समगन्ध च दीयते, a variant in D K has an incomplete charana—गन्धते (3) D reads सहस्रे स च सूतकम्, which is incorrect. K reads समस्रेशो च सूतक which is also incorrect. (4) D reads वज्रकं ता तु which is senseless. (5) This hemistich and the next one are not found in D (6) D and K read तद्भस्मवज्र, which is grammatically incorrect (7) D has चर्वयेत् पिष्टिक समम् K has चर्वयेत् पौष्टिकासम (8) तत्सूतगोलक भाग, a variant in B. (9) K reads गतदेहं (10) D reads मृद्वाहेन, which is incorrect B reads अर्धांशेन (11) B reads धमेत्तदन्धमूषायां D has an incomplete charana—धमयेदेध (12) B reads वज्रजारित D reads वज्राजारित Both are incorrect (13) B and D read सहस्रे वै

अर्धार्ध[1] प्राप्यते भस्म गोक्षीरसदृश प्रिये ॥ ७२ ॥
स्नेहे घृत[2] च यत्कल्क कङ्गुणीतैलसयुतम् ।
त्रिसप्ताहाद्दरारोहे कायशुद्धिस्तु[3] जायते ॥ ७३ ॥
तिलमात्र वज्रभस्म हेमभस्म च तत्समम्[4] ।
धमेद्धत्तूर[5]सलिल वलीपलितनाशनम ॥ ७४ ॥
शुद्धहेम पलान्यष्टौ मृत[6]सूतसमायुतम् ।
मर्दयेन्मध्यमाम्लेन गोलको भवति क्षणात् ॥ ७५ ॥
अर्द्ध च प्राप्यते भस्म गोक्षीरसदृश प्रिये[7] ॥ ७६ ॥
मृतवज्रस्य भागैक गोलभागचतुष्टयम्[8] ।
मर्दयेत् तप्तखल्लेन भस्मीभवति सूतक ॥ ७७ ॥
मारयेद्भूधरे यन्त्रे सप्तसकलिकाक्रमात् ।
तद्भस्म तु[9] पुन पश्चात् मध्यमाम्लेन मर्दयेत् ॥ ७८ ॥
पुट दद्यात् प्रयत्नेन पञ्चाधिकशतत्रयम् ।
तद्भस्म जायते देवि[10] सिन्दूरारुणसन्निभम् ॥ ७९ ॥
तद्भस्म पलमात्र तु लिह्यान्मध्वाज्यसयुतम् ।
लिह्यादेव सप्तवार क्षीराहारी जितेन्द्रिय. ॥ ८० ॥

---

(1) D reads अर्द्धार्ध B reads अर्धोर्ध्वं (2) D reads घृत (3) D reads कार्यसिद्धिश्च (4) तत्समांश हेमभस्मक an incorrect variant in D (5) B reads धमेद्धत्तूर (6) D has भूत. K has द्रुत (7) This hemistich is not found in D ; अथ अथ प्रथमतो भस्म गोक्षीरसदृश, a variant in K (8) गोलाभागचतुष्टये a variant in B गोलभागा is the reading in D (9) D reads तद्भस्मना तु which is grammatically incorrect (10) तद्भस्म जायते दिव्य, a variant in D and K

द्वितीये सप्तमे चैव[1] भक्षयेच्च पलद्वयम्[2] ।
अनया क्रमवृद्ध्या तु[3] भक्षयेत् सप्तसप्तकम्[4] ॥ ८१ ॥
तद्वृद्ध्या[5] जायते सिद्धो[6] दिव्यतेजा भवेन्नरः ।
रुद्रायुष भवेत्तस्य[7] खेचरत्व[8] न संशय ॥ ८२ ॥
तस्य मूत्रपुरीषाभ्या लोहान्यष्टौ च काञ्चनम्[9] ॥ ८३ ॥
तद्भस्मपलमेक तु क्रामणेन समन्वितम् ।
द्रव्याद्द्वादशसाहस्र पलमाने भुजङ्गमे ।
जायते कनक दिव्य देवाभरणभूषणम् ॥ ८४ ॥
कान्तचूर्णपलान्यष्टौ पलान्यष्टौ रसस्य च ।
एकीकृत्याथ समर्द्य वीजपूराम्लमर्द्दितम् ।
मर्द्दयेत्तप्तखल्लेन गोलको भवति क्षणात् ॥ ८५ ॥
मृतवज्रस्य भागैक गोलभागचतुष्टयम् ।
एकीकृत्याथ समर्द्य भस्मीभवति सूतकः ॥ ८६ ॥
मारयेद्भूधरे यन्त्रे सप्तसकलिकाक्रमात् ।
तद्भस्मभागमेकन्तु भागैक गन्धकस्य च ।
अन्धमूषागत ध्मात खोटी भवति तत्क्षणात् ॥ ८७ ॥
द्वात्रिंशन्मृतखोटस्य शुद्धहेम्नश्च विंशति ।

---

(1) B reads सप्तके चैव K reads प्रथमेनैव (2) B has भक्षयेत्त यवद्वयम् (3) B reads erroneously अनेन क्रमवृद्ध्या तु D has an absurd variant प्रवया क्रमवध्या च (4) K reads सप्तसायक which is incorrect (5) D and K read वर्द्धते (6) K reads सिद्धि (7) B reads भवतीन (8) K reads चमरत्व (9) The following nineteen hemistichs are not found in D and K

तारं ताम्रं व्योमसत्त्वं कान्तसत्त्वं चतुर्थकम् ।
एकैकं द्वादशांशाः स्युः सर्व्वमेकत्र कारयेत् ॥ ८८ ॥
अन्धमूषागतं ध्मातं खोटो भवति तत्क्षणात् ।
द्राविशग्मिलितः खोटान् सूक्ष्मचूर्णं तु कारयेत् ॥ ८९ ॥
तत् खोटसूक्ष्मचूर्णं तु आरोटरससंयुतम् ।
मर्द्दयेन्मध्यमाम्लेन गोलको भवति क्षणात् ॥ ९० ॥
गोलकस्य पले द्वे च मृतकान्तस्य तत्समम् ।
एकीकृत्याथ समर्द्य मेघनादरसेन च ।
मुनिपुष्परसेनैव दिनमेकं च मर्द्दयेत् ॥ ९१ ॥
गुटिका [1] कारयेद्देवि षष्ट्यधिकशतत्रयम्[2] ॥ ९२ ॥
तत्रैका गुटिका सर्पिस्त्रिफलामधुसंयुताम् ।
भक्षयेद्वर्षमेकं तु ब्रह्मायुर्जायते नरः ॥ ९३ ॥
सर्व्वा मात्रा भक्षयेत् पश्चात् रुद्रायु स भवेन्नरः[3] ॥ ९४ ॥
अथैका धारिता वक्त्रे[4] गुटिकामरसुन्दरि ।
हठाद्रोगाणि कृत्स्नानि[5] पलितानि च नाशयेत् ॥ ९५ ॥
उपचारं प्रवक्ष्यामि वज्रसत्त्वरसायने[6] ॥ ९६ ॥
वज्रबद्धस्तु यो[7] देवि रसोऽयं वज्रता नयेत् ।

---

(1) B reads घुटिका (2) B reads सहस्रकम् (3) This hemistich is not found in D and K (4) घटैक⁴ धारिते वक्त्र an incorrect variant in B This hemistich is not found in K (5) रोगाणि is grammatically incorrect [रोगान् is the correct term] (6) वज्र बन्धरसायन a variant in B वज्र तु सत्वरसायने a variant in D. (7) D reads erroneously वज्रबन्धनया.

तेन मद्यास्तु ये देहास्ते देहा वज्ररूपिणः ॥ ८७ ॥
तिलमात्रं रसं[1] देवि ब्रह्मायुर्दश[2] जीवति ।
यवमात्रं रसं देवि विष्णुकोटिं स जीवति[3] ॥ ८८ ॥
गुञ्जामात्रं तु[4] देवेशि महाकल्पायुषो भवेत् ।
माषमात्रं वरारोहे मम तुल्यगुणो भवेत् ॥ ८९ ॥
मन्त्रहीनेन[5] सुभगे न स गम्यो[6] भविष्यति ।
न सिद्धिसाधनं[7] तस्य जन्मकोटिशतैरपि ॥ १०० ॥
मूढ़चित्तो भ्रमत्येष कुलशासनवर्जितः[8] ॥ १०१ ॥
तस्य विघ्न[9]सहस्राणि कुर्व्वते[10] देवदानवाः ।
देव्यश्चाकाशगामिन्यो भूचर्य्यश्च[11] सुरेश्वरि ॥ १०२ ॥
स्वप्ने तं भजयित्वा तु[12] रेतोरक्तं हरन्ति ताः[13] ।

---

(1) B and D read तिलमात्ररसो. [Here भक्षयित्वा s to be understood ]
(2) D reads देश, which is incorrect (3) This hemistich is not found in B and D (4) B reads गुञ्जामात्रेण (5) B reads मन्त्रहीने (6) B reads मश्रिवाज्ञा, which is unintelligible K reads गामगाय. (7) D reads न सिद्धि साधन (8) मूढचित्ता भमन्त्येषा, a partly incorrect variant in D. मूढाचिंता भमन्त्येषु an incorrect variant in K (9) D and K read विद्या, which is incorrect (10) D and K read कुर्वते, which is inc. (11) D reads मूचर्ज्जस, which is not correct (12) स्वप्नं ते य भजयित्वा, a variant in B स्वल भचयित्वा तु, an incomplete variant in D. स्वप्ने तेल चयित्वा तु, a variant in K. (13) B has रसोरक्ते हरति वै, an incorrect variant D has रेतारक्तहरि प्रिये, K has रसोरक्तहर प्रिये. Both are incorrect.

तेनैव रेतोमार्गेण[1] हरन्ते भक्षितं[2] रसम् ॥ १०३ ॥
भास्कराद्या ग्रहा देवि गर्ज्जन्ति निजरूपतः[3] ।
क्षत्रियस्य तु रूपेण देवा वै गर्ज्जयन्ति च[4] ॥ १०४ ॥
पिशाचा वैश्यरूपेण[5] शूद्ररूपेण[6] राक्षसाः ।
अन्ये मानुषरूपेण भजन्ते स्वपनान्तरे[7] ॥ १०५ ॥
अस्थिमांसानि खादन्ति स्वप्नेषु[8] सुरसुन्दरि ।
स्वप्नान्ते प्राप्यते भ्रांतिः[9] प्रायः पश्यति मानवः[10] ।
वज्रभस्म हरन्त्येव[11] स्वप्नान्ते चोभयन्ति च ॥ १०६ ॥
भक्षिते हेमविमले पलायन्ते दिशो दश ।
भूतप्रेतपिशाचाश्च शाकिन्यो गुह्यकादयः[12] ॥ १०७ ।
वज्राणां मारणे ये तु[13] लोहानां वा रसस्य तु[14] ।

---

(1) D reads हेमार्केन, which is absurd (2) B reads रक्षि which is incorrect D and K read रंजित भक्षितो, which is also inco rect (3) गर्जन्तीतीमरूपतः, an incorrect variant in K (4) दे वेवेन भजति, an absurd reading in D देवि कैर्जयन्ति च, an incorrect a incomplete chaন্না in K (5) D and K read विश्वरूपेण, which incorrect (6) D reads शूद्ररूपेण K reads शूद्रारूपेण Both are incorre (7) भुज्यन स्वप्नान्तरे, an incomplete variant in B D reads भजन्तो, whi is incorrect, K reads भुजन्ते, which is also incorrect. (8) B rea स्वप्नैः हि (9) D reads प्राप्यतेन K reads प्राप्य एतेषु (10) पश्यं मानवैः, a variant in D (11, वज्रभक्षोदर तेन, a variant in D and K (12) B reads काकिन्यो K reads किन्नरो (13) B reads मारण वै D reads वज्रिणां मारण तुल्य K reads मरणा तु (14) रसमारणस्य a variant in D, which seems to be incorrect.

वर्ज्जनीया: प्रयत्नेन[1] प्रयुक्तांस्तान् शृणु[2] प्रिये ॥ १०८ ॥
तेषां युक्तिप्रकारास्तु[3] प्रयुक्ता युक्तिदायके.[4] ।
एवं वदन्ति भूताद्या भीषयन्ति स्म तं नरम्[5] ॥ १०९ ॥
रञ्जको रागकारी[6] स्यात् क्रामण: क्रामणे हित:[7] ।
बन्धका दृढकाराश्च[8] तथा पुष्टिकरा: स्मृता:[9] ॥ ११० ॥
शुक्रशोणितविण्मूत्रे विविधेन तु भक्षयेत् ।
कुष्ठव्याधिकर तच्च[10] नागवङ्गकलङ्कितम्[11] ॥ १११ ॥
त्रिफलाजातिकङ्कोलं कर्पूररसमिश्रितम् ।
खदिरं समतोयेन मर्द्दितं भक्षयेद्रसम् ॥ ११२ ॥
पयसा कटुकं दृष्ट्वा[12] पथ्यं[13] क्रामणमुत्तमम् ।

---

(1) ते वर्जनीया यत्नेन, a variant in B. (2) B has प्रयुक्ता श्रवण. D has प्रसक्तायवणा K has प्रयुक्ता श्रवण (3) तेषां युक्तिकरा ये तु, a variant in B and K (4) प्रयुक्ता युक्तिकादय, a variant in B प्रयुक्ता युक्तिकादय, a variant in D (5) This hemistich is not found in D and K (6) B reads रञ्जिको D reads रागकारी Both are incorrect. (7) क्रामणीतृक्रामणोदितम्, a variant in D K reads erroneously क्रामणी क्रामये (8) वद्धका दृढकायाश्च, a variant in B D reads बन्धको बद्दा दृढकरायैव a variant in K (9) B reads स्मता. (10) कुष्टव्याधिकर चैव a variant in D. कुष्टव्याधिकरी ताय, a variant in K. (11) नागवगकलचितौ, a variant in D भागवगकलकितौ, a variant in K. (12) D reads द्दत्ता, which is incorrect (13) D and K read पथ्य

स्तन्येन हेमघृष्टेन न खाद्योऽयं[1] सुरेश्वरि ॥ ११३ ॥
अलम्बुषायस्कान्तस्य[2] तालकस्य[3] च भक्षणात् ।
देहे[4] क्रामति सूतेन्द्रो नात्र कार्या विचारणा ॥ ११४ ॥
अवश्यं क्रमते सूतः स्त्रीयोगे क्रामणं परम् ।
ब्रह्मचर्येण वा योगी[5] सदा सेवेत[6] सूतकम् ॥ ११५ ॥
समाधि कारणं तत्र[7] क्रामणं परमं मतम् ॥ ११६ ॥
प्रभाते भक्षयेत् सूत[8] पथ्य[9] यामद्वयाधिके ।
नो लङ्घयेत् त्रियामं तु मध्याह्ने न तु[10] भोजयेत् ॥ ११७ ॥
अतिपानं चात्यशन[11]-मतिनिद्रातिजागरम् ।
स्त्रीणामतिप्रसङ्गं चात्यध्वानं च विवर्ज्जयेत्[12] ॥ ११८ ॥
अतिकोपं चातिहर्षं मतिलौल्य मतिस्पृहाम्[13] ।
शुष्कवादं जलक्रीडामतिचिन्ता च वर्ज्जयेत्[14] ॥ ११९ ॥
कुष्माण्डं कर्कटीं चैव कालिङ्गं[15] कारवेल्लकम्[16] ।

---

(1) B has न खड्रोय, D has खधेयर K has न खंडोय. (2) D reads अलम्बुमायसकाय, which is incorrect. (3) D reads तालकस, which seems to be incorrect (4) B reads देह (5) D and K read ब्रह्मचर्ये न वा कुर्यात् (6) D and K read पादाशिनैव (7) D and K read तस्य (8) D and K read सूते which is incorrect (9) D reads पद, which is incorrect (10) B reads मध्ये न तु which is incomplete. (11) D reads चात्यदान (12) स्वर्ण चाति वर्जयेत् a variant in D and K (13) B reads स्तोमर्द D reads मनस्पृह. Both are incorrect. (14) चलितोपांविवर्जयत्, a variant in D (15) D reads कलिङ्ग (16) K reads कारवल्लिका

कुसुम्भकञ्च कर्कोटं[1] कदलीं काकमाचिकाम्[2] ।
ककाराष्टकमेतद्धि वर्ज्जयेद्रसभक्षक.[3] ॥ १२० ॥
पातकं च न कर्त्तव्यं पशुसङ्गं विवर्ज्जयेत्[4] ।
लिङ्गच्छाया[5] न लङ्घेत नारीच्छायां तथैव च[6] ॥ १२१ ॥
चतुःपथे न गन्तव्यं[7] विण्मूत्रं न च लङ्घयेत् ।
सुराणां निन्दनं देवि[8] स्त्रीणां निन्दां च वर्ज्जयेत्[9] ॥१२२॥
सत्यं च वचनं ब्रूयादप्रियं न वदेद्वचः[10] ॥ १२३ ॥
कुलत्थमतसीतैलं तिलान् माषान् मसूरकान्[11] ।
कपोतकं काञ्जिकान्नं तक्रभक्तं च वर्ज्जयेत् ॥ १२४ ॥
कट्वम्लतीक्ष्ण[12]लवणं पिच्छिलं[13] पित्तलं च यत् ।
तिलतैलं दधि क्षीरं[14] द्राक्षाकोलपरूषकम्[15] ॥ १२५ ॥
बदरं करविल्वञ्च[16] सहकारं सुवर्च्चलम् ।

---

(1) कुसुम काचककर्कोट, a variant in D K reads कुम्भीककर्कोटी, which is incomplete (2) B reads काचमारीका, which seems to be incorrect. (3) B reads भक्षभक्षक (4) पशुसंग च वर्जयेत्, a variant in K. (5) K reads लिंगच्छाया (6) B reads न लङ्घयेत् (7) B reads न कर्तव्य (8) देवतानां न निन्देत्, a variant in D वीराश्च निन्देद्देवि, a variant in K. (9) D reads स्त्रीनिन्दां, which is incorrect K reads स्त्रीनिन्दां चैव वर्जयेत् (10) दप्रियो न वदेद्वच, a variant in B, which is partly incorrect. (11) B reads मसूरिका D reads मसूरिका. Both seem to be incorrect (12) B reads तिक्त (13) D and K read पिच्छलं. (14) तिल्तैले दधिचारे, a variant in B. (15) द्राक्षाक्षौ चनस तत, a variant in D and K (16) B reads नारिकेलच

नारङ्गं काञ्चनारञ्च[1] शोभाञ्जनमपि त्यजेत् ॥ १२६ ॥
क्षुधार्त्तो नैव तिष्ठेत अजीर्णं नैव[2] कारयेत् ।
न वादजल्पनं[3] कुर्य्यात् दिवास्वापं न कारयेत्[4] ॥ १२७ ॥
नैवेद्यं नैव भुञ्जीत कर्पूरं वर्ज्जयेत् सदा ।
कुङ्कुमालेपनं वर्ज्ज्यं वर्ज्जयेन्नटनं क्षितौ ॥ १२८ ॥
नाग्निं स्पृशेत्तु[5] पादेन न गा वा[6] ब्राह्मणांश्च च ।
न हन्यात्तु कुमारीं च वातुलानपि[7] वर्ज्जयेत्[8] ॥ १२९ ॥
दिवारात्रं जपेन्मन्त्रं स्नातव्यं च दिने दिने ॥ १३० ॥
क्षिप्तश्च मुद्रा[9] दुग्धान्नं शाल्यन्नं च समाहितम्[10] ।
शाकं पौनर्नवं[11] देवि मेघनादं च वास्तुकम् ।
सैन्धवं नागरं मुस्तां पद्ममूलानि भक्षयेत् ॥ १३१ ॥
उद्भिन्नचूचुका[12] श्यामा सुरूपा सुभगा शुभा ।

---

(1) B reads विनारंच (2) K reads न च (3) B reads वादजल्प, which renders the charaṇa incomplete (4) दिवाचारो न पर्यटेत्, a variant in B (5) D reads स्पृशेत, which is grammatically incorrect (6) B, D and K read न गावो, which is grammatically incorrect (7) B reads मातुलानौ D reads मातुलानां, which is incorrect (8) After this śloka we find in B the following hemistich कुर्य्यात्तिमेव तिष्ठेत चञ्चौर्य न च कारयेत्, which we have rejected, the first charana being absurd, and the second being a *repitition* (9) K wants मुद्रा (10) B, D and K read समाहित, which is not *accurate*, समाहित *here means* विशोधित and qualifies शाल्यन्न (11) D reads पुनर्नव K reads शाक च पुन, an incomplete charaṇa (12) D reads erroneously उद्धत चुचुका

दिव्यतेज समायुक्ता कामशक्तिविवर्द्धिता[1] ।
सन्निधाने च कर्त्तव्या हृद्देश[2] परिरच्चिता ॥ १३२ ॥
कृष्णागौरातिहृद्वाङ्गी[3] कुशीला न भजेत् क्वचित् ॥ १३३ ॥
तिलक कुङ्कुम गन्ध[4] कस्तूर्य्या च मनोहरम् ।
सुरभीणि च पुष्पाणि सुखशय्यष्टभोजनम् ॥ १३४ ॥
सुखवासित्वमेवोक्त[5] क्रामण सूतकस्य तु ।
आत्मज्ञानकथा पूजा[6] शिवस्य तु विशेषत ॥ १३५ ॥
एतासु[7] समयान् भद्रे न लङ्घेद्रसभचणे ।
लङ्घनादिविध लच्य लच्चण तस्य[8] कथ्यते ॥ १३६ ॥
रसराजे त्वजीर्णे तु[9] प्रत्ययोऽय भवेत् प्रिये ।
मूर्च्छा शोको भ्रम कम्प. छर्द्दिर्मोहो ज्वरस्तथा[10]॥१३७॥
हिक्काविपथुशूलानि[11] निद्रालस्यमरोचकम्[12] ।
लिङ्गस्तम्भो ह्यतीसार [13] कासश्वासविजृम्भिका [14] ॥१३८॥
कर्णाक्षिचक्षु कुक्षौ च वृषणोदर[15]मूर्द्धनि ।

(1) B reads विवर्जिता (2) भवेच परिरजिता a variant in D K reads हृदन (3) D reads सवाङ्गी K reads सवाणि, wh ch is incorrect (4) तिलकुङ्कमगन्ध च a variant in D तिलकुकुमक गध, a variant in K (5) D read सवोक्त (6) B D and K read माया (7) D reads एकसन्तु wh ch is incorrect (8) D reads सन K reads चाव (9) रसराजे तु जीर्णे तु an incorrect variant in D (10) छर्दिमूर्च्छादाह ज्वर, a variant in B (11) D reads व्यलन (12) B D and K read करोचक (13) B reads ह्यतीसार. K reads ज्वतिसार (14) B reads विजृभका (15) B reads जठरोदर

मेढ्रे दाहोऽग्निमान्द्यञ्च[1] जातः सर्व्वाङ्गसंशय ॥ १३९ ॥
अन्यांश्चैव महाव्याधीन् रसाजीर्णे तु[2] लक्षयेत् ॥ १४० ॥
काञ्जिक[3] सर्जिकाक्षार कारवल्ली[4]रसप्लुतम् ।
गोमूत्रसैन्धवयुतं[5] तस्य संक्रामण[6] पिबेत् ॥ १४१ ॥
मोचकस्य रस देवि राजकोषातकीरसम् ।
*सिन्धुक क्षारगोमूत्रं कारवल्लीरसप्लुतम् ।*
सौवर्चलसमोपेत रसाजीर्णे पिबेन्नर.[7] ॥ १४२ ॥
रसाजीर्णे न जीवेत्तु म्रियते नात्र संशयः ।
रसायने सुजीर्णे तु तेन सर्व्वं विधीयते[8] ॥ १४३ ॥
यदा सुप्तस्तदङ्ग च[9] स्त्री स्तनेनैव घर्षयेत् ।
वामेन मर्द्दयेदेवं सूल' क्रामति निर्व्यथः[10] ॥ १४४ ॥
निवाते निर्जने स्थाने भूगृहे निरुपद्रवे ।
शीतातपविनिर्मुक्त'[11] पथ्याशी लघुभोजक.[12] ।

---

(1) मेढ्रदाहोऽग्निसंधय, a variant in B. मेढ्र दाहाग्निमदाश a variant in D मेढदाहोग्निमदश a variant in K (2) B reads रसाजीर्णे K reads रसेजीर्णे (3) B reads काञ्जीक (4) B reads कारवेल्लि D reads करवल्ली (5) This hemistich and the next two are not found in D K has गोमूत्र दैन्धव युत (6) K reads तस्य स कामय (7) B reads पिबेद्रस which is incorrect (8) B has स भवेत् द्याशु पच्यते which has no sense (9) स सुप्तेनर्गस्य, a variant in B. तेऽपि सुप्तस्तदङ्गे, a variant in D K has an incomplete hem stich तेपि सुप्त तैनेव येत् (10) K wants this term (11) D and K read विनिर्मुक्तो, which is *grammatically incorrect* *(12) B reads लघुभुजन* D reads शीलभुजनर K reads लघुभजक All a e incorrect.

यथोक्तदिवसे.[1] सिद्धिं प्राप्नुयान्नात्र संशयः ॥ १४५ ॥
सर्व्वाहारेण[2] दिवसैर्द्विगुणैः सिद्धिमाप्नुयात् ।
सेवनाच्छीतवाताभ्यां[3] त्रिगुणैर्दिवसैः क्रमात् ।
अतिमार्गस्य धर्म्मेण[4] दिवसैस्तु चतुर्गुणैः ॥ १४६ ॥
तत्र वेधं प्रवक्ष्यामि देहसिद्धिकपूर्व्वकम्[5] ।
तव स्नेहेन देवेशि प्रोक्तमेव रसायनम्[6] ॥ १४७ ॥
त्वग्वेधः प्रथमं देवि[7] मांसवेधो[8] द्वितीयकः ।
तृतीयो रक्तवेधस्तु[9] चतुर्थश्चास्थिवेधकः[10] ॥ १४८ ॥
पञ्चमो मज्जवेधः स्यात्[11] स्नायुवेधस्तु षष्ठकः[12] ।
सप्तमो धातुवेधश्च[13] अष्टमः कवचस्य तु ॥ १४९ ॥
त्वचावेधेन देवेशि पन्नगः कुटिलो भवेत् ।
मांसवेधेन सुभगे कुटिलं काञ्चनं भवेत्[14] ॥ १५० ॥

---

(1) D reads यथोक्त दर्शने, which is incorrect (2) D has सिद्धावहारेण. K has सद्यवहारेण Both are incorrect. (3) B reads सेवनाच्छीतवाताभ्यां D reads ये जना चिति वा सिद्धि K reads सेवनाच्छिशी वाताभ्यां. All are incorrect (4) D reads अद्भनि मार्गस्य धर्मे च, which is incorrect K reads अधान, which is also incorrect (5) This hemistich and the next one are not found in D. (6) K reads मपूर्वत (7) D reads देव, which is incorrect (8) B reads मांसवेधो, which is not correct D reads खवेधो, which is also incorrect. (9) D and K read चौरवेधस्तु (10) चतुर्थथाधिवेधक', an incorrect variant in D (11) D has वज्रवेधय K has वज्रवेधय Both seem to be incorrect. (12) D has षष्टम', which is incorrect. (13) B and D read वधवेधच (14) This sloka is not found in D

अस्थिवेधेन देवेशि तीक्ष्णं कनकतां व्रजेत् ।
मज्जवेधो[1] वरारोहे लोहान्यष्टौ च वेधयेत् ॥ १५१ ॥
कवचस्य तु वेधेन मृन्मयं काञ्चनं भवेत् ।
वेधे तु[2] हेमविमले मजन्तो[3] हेम प्रजायते ॥ १५२ ॥
तारे[4] मासं सुरेशानि जीर्णसूतश्च वेधयेत् ।
अलके[5] विमले ताप्ये तीक्ष्णे तारे च[6] भास्करे ॥ १५३ ॥
क्रामणं तु भवेत्तत्र शर्करा माक्षिकं तथा ।
कपिलाक्षणगोतत्र तत्तु[7] देवि रसायने[8] ॥ १५४ ॥
सात्त्विकं गव्यतत्र तु राजसं सारसोद्भवम्[9] ।
तामसं माहिष[10] तत्र देयं नैव[11] रसायने ॥ १५५ ॥
आर्द्रकस्य रसो देवि तथा पूग[12]फलानि च ।
मर्दनं नवनीतेन रसस्य क्रामणं परम् ॥ १५६ ॥
अधमं शाकमूलोत्थं मध्यमं फलमूलजम् ।
उत्तमं देवदेवेशि रसकं तु रसायने ॥ १५७ ॥

---

(1) B and K read मज्जावेधे (2) B reads वेध तु (3) B reads मज्जनात् D and K read मज्जानां (4) B reads तार (5) D reads चलके. K reads चटका. *Both seem to be incorrect* (6) K reads तीक्ष्णतारे च (7) K reads तत्र (8) B reads रसायन (9) राजसं सखा रसोद्भवम् a variant in B (10) D reads पवित K reads भैषिज (11) B has रसे चैव But D and K have देय नैव We have adopted the latter opinion since तामस is the worst of the kind. (12) D reads तथा पूगी

सीसवेधेन नीलाभ [1] ताम्रेणारुणसंप्रभ' ।
रजतेनेन्दुसंकाशो[2] हेम्ना काञ्चनसन्निभ.[3] ॥ १५८ ॥
धूमावलोकी वक्त्रस्थो[4] मासात् खेचरतां नयेत्[5] ।
स्पर्शवेधी तु वक्त्रस्थो[6] द्विमासात् सिद्धिदायकः ॥ १५९ ॥
शतकोटिस्त्रिभिर्मासै. चतुर्भिर्दशकोटिक [7] ।
पञ्चभि पञ्चकोटिश्च[8] षड्भि स्यात् कोटिवेधक.[9] ॥१६०॥
एवं क्रमेण कुरुते शरीरमजरामरम् ।
अणिमादिगुणैश्वर्यमाज्ञासिद्धिः प्रजायते[10] ॥ १६१ ॥
सप्तभिर्लक्षवेधी स्यादष्टाभिश्चायुतं पुन.[11] ।
सहस्र नवभिर्मासैर्दशमासै शतं पुन ॥ १६२ ॥
तस्य मूत्रपुरीषैस्तु श्लेष्मणाङ्गमलैस्तथा ।
लेपाद्धेमत्वमायान्ति[12] पाषाणादीनि[13] भूतले ॥ १६३ ॥
चतुःपञ्चशतो वेधी मासैकाद्दशवेधक ।

---

(1) सीसावद्धेन नीलाभ, a variant in B, which seems to be incorrect D and K read नीलाभ (2) This charana is not found in D (3) B reads हेम D wants this hemistich (4) धामावलोकी चक्रस्थो, an incorrect variant in D (5) मासं खेचरतां व्रजेत् a variant in D (6) D reads चक्रस्थो which is incorrect (7) D reads दशकोटिभि K reads दशकोटय (8) कोटिवेधी पञ्चभिर्मासै, a variant in D (9) B reads दशकोटिकृत् D reads षण्मासे instead of षड्भि स्यात् K reads दशकोटय (10) D and K read प्रवर्तते. (11) D has दृष्टभिश्च पुन पुन (12) लेपयद्धेमत्व, an incorrect variant in D (13) B reads यानि लोहानि

द्वात्रिंशांशकवेधी तु[1] वर्षाद्देहं तु वेधयेत्[2] ॥ १६४ ॥
कुञ्चिताग्रास्तु यत्केशा या श्यामा[3] पद्मलोचना ।
विस्तीर्णं जघनं यस्याः[4] सङ्कीर्णं हृदयं भवेत् ॥ १६५ ॥
कृष्णपक्षे भवेद्यस्या युवत्याः पुष्पदर्शनम्[5] ।
कामिनी सा समाख्याता उत्तमा च रसायने ॥ १६६ ॥
आलिङ्गने स्पर्शने च[6] मैथुनालापयोरपि[7] ।
सर्व्वरोगविनिर्मुक्तो वलीपलितवर्जितः ॥ १६७ ॥
नासौ छिद्येत शस्त्रैश्च पावकेन न दह्यते[8] ।
वायुवेगो महातेजा, कामदेव इवापरः ॥ १६८ ॥
इच्छया जायते दृश्यो ह्यदृश्यश्चैव[9] जायते ।
तस्य[10] सस्पर्शमात्रेण सर्व्वलोहानि काञ्चनम् ॥ १६९ ॥
तस्मिन्नेकार्णवे घोरे नष्टस्थावरजङ्गमे[11] ।
देवा यत्र विलीयन्ते[12] सिद्धस्तत्रैव लीयते[13] ॥ १७० ॥

---

(1) द्वात्रिंशत् कोटिवेधी च, a variant in D (2) वर्षाद्दश देहं वेधयेत्, a variant in D. (3) D reads श्यामा या K wants this hemistich and the next one (4) B reads विस्तीर्णजघनं तथा, which is not accurate (5) D reads पुष्पकर्षणं, which is incorrect. (6) आलिङ्गनेन स्पर्शनेन, a variant in B आलिंगन स्पर्शने च, a variant in K. (7) D reads erroneously मैथुनाद्वे षयोरपि (8) पावकेन च विद्यते, an incorrect variant in D (9) संदृश्यश्चैव, a reading in D and K, which is *incorrect* (10) *D reads erroneously* तस्मा (11) नष्टे स्थावरजङ्गमे, a variant in D (12) K reads विलियन्ते (13) सिद्धस्तत्रैव जायते, a variant in D

इदं रहस्यं परमं मया प्रोक्तं[1] सुरेश्वरि ॥ १७१ ॥
साधुसज्जनसारघ्ना रसजीर्णक्रियापराः ।
रसवादीति संप्रोक्ता[2] इतरे द्वेषवादिनः[3] ॥ १७२ ॥
पुनरन्यां[4] प्रवक्ष्यामि गुटिकां रसदुर्लभाम् ॥ १७३ ॥
वङ्गसीसकशुल्वाभ्र-हेमतारसमन्वितः[5] ।
वज्रायसादिभिर्युक्त क्रियते वादिकैः[6] रसः ॥ १७४ ॥
सर्व्वांस्तानेकतः कृत्वा[7] मूषामध्ये स्थितान्[8] धमेत् ।
गुटिका जायते दिव्या नाम्ना वज्राङ्गसुन्दरी ॥ १७५ ॥
मुखस्था सिद्धिदा प्रोक्ता जरामृत्युविनाशिनी ॥ १७६ ॥
संग्रामे विजयी वीरो वज्रदेहो महाबलः ।
सर्व्वलोकप्रियो नित्यं नारीणां सुभगस्तथा ॥ १७७ ॥
वज्रव्योमजसत्त्वकं सकनकं[9] चन्द्रं रविं कान्तकं[10]
नागं वङ्गमथायसं[11] दृढतरं सूतं कृतं तत्समम्[12] ।

---

(1) B reads प्रोक्त. This hemistich and the next three are not found in D (2) B reads रसवादी इति प्रोक्ता K reads रसवादि इति प्रोक्ता (3) B has दूषणवादिन, which is incorrect (4) K reads पुनरन्य, which is not correct (5) D reads समन्विते (6) B reads वादको (7) B reads सर्वांस्तामेकीकृत which is incorrect (8) D reads मूषामध्ये स्थितौ K reads मूखामध्ये स्थिता Both are incorrect. (9) D has वज्राकीकनकं K has वचतां सकनक Both are incorrect (10) D reads चांद्र रविसम K reads चांद्र रवि कनक Both are incorrect (11) B reads नाग वगतीक्ष्णसुरायस D reads तीक्ष्ण कान्त तदायस K reads तीक्ष्ण कान्त तदायस (12) मूषक कृत्य तत्सम, an incorrect variant in D

वज्रास्यं रसगोलकं रतिकरं सर्व्वार्थदं तापहं[1]
वर्षैकेन निहन्ति दोषनिचयं कल्पायुषो जायते ॥१७८॥
पूर्व्वसिद्धरसे[2] देवि पादांशं[3] हेम योजयेत् ।
मृतवज्रपलांशेन[4] व्योमसत्त्वं प्रयोजयेत् ॥ १७९ ॥
चीरकञ्चुकितोयेन सुरदालीरसेन च ।
विधिना मर्द्दयित्वा तु नष्टपिष्टं तु कारयेत्[5] ॥ १८० ॥
कान्तचूर्णत्रुटि[6] दत्त्वा मूकमूषागतं धमेत् ।
गुटिका[7] जायते दिव्या वज्रास्या सर्व्वसिद्धिदा ॥ १८१ ॥
सुभग माक्षिकं[8] चैव वज्रमभ्रकमेव च ।
हेम शुल्वं तथा तारं[9] समभागानि कारयेत् ।
वस्त्रबद्धा तु गुटिका वज्रास्या सर्व्वसिद्धिदा[10] ॥ १८२ ॥
भ्रामकं माक्षिकं चैव लोहत्रयसमन्वितम् ।
शक्तिबीजसमायुक्तं बीजत्रयसमन्वितम्[11] ॥ १८३ ॥
विदण्डीमर्द्दितं सूतमेकीकृत्य[12] च गोलकम् ।
अन्धमूषागतं ध्मातं समावर्त्तं तु[13] कारयेत् ॥ १८४ ॥

---

(1) B reads सर्वार्थसंधापद. D reads सर्वार्थसतापद K reads सर्वार्थि संतापदं (2) D and K read पूर्वसिद्धिरसो, which is incorrect (3) B reads पादांश (4) B reads कलांशेन (5) D wants this charana and the next one (6) B reads त्रुटि which seems to be incorrect (7) B reads घुटिका (8) D has सवह सुभगां, which is not correct (9) D reads ताम्र (10) This hemistich and the next one are not found in K (11) D wants this hemistich (12) D and K read सूतमेकीकृत्वा which is grammatically incorrect (13) B reads समावर्त्तन्तु which is not correct

पूजां कृत्वा चिपेदह्नौ पक्षमासात् स भवेत् प्रिये ।
अभयः सर्व्वशत्रूणां[1] वज्रकायो महाबलः ॥ १८५ ॥
नन्दिकेश[2]कुमाराद्या भक्ष्यमाणं हरन्ति ये ।
नष्टच्छाया न दृश्यन्ते हस्ते ददति[3] भस्म च ॥ १८६ ॥
क्रियमाणं रसं तेसु[4] मूढ़बुद्धिर्न पश्यति[5] ।
कथयेत् सर्व्वजन्तूनां न मे सिद्धी[6] रसायने ॥ १८७ ॥
मनसा रससिद्धिस्तु[7] तथा क्लेशो मया कृत.[8] ।
मया कृता द्रव्यहानिर्दुर्धिया[9] मूढ़चेतसा ॥ १८८ ॥
ईदृशं नैव जानाति[10] विधिहीनं मया कृतम् ।
पापिष्ठो दूषयेच्छास्त्रमात्मकर्म्म न विन्दति ॥ १८९ ॥
विधिहीनो रसो देवि[11] नैव सिध्येत्[12] कदाचन ॥
शास्त्रहीनस्य देवेशि नैव सिद्धिर्वरानने[13] ॥ १९० ॥
अशुभैः कर्म्मभिः सर्व्वैः[14] सम्प्रदायो न सिध्यति[15] ।

(1) B reads सर्व्वशस्त्राणां. (2) B and D read नन्दिस्कन्द, which is a repitition. (3) D reads ददाति, which is grammatically incorrect (4) क्रियमाण रसैस्तैस्तु, a variant in K, which is incorrect (5) D reads नियच्छति K reads न यच्छति (6) B, D and K read सिद्धि, which is grammatically incorrect. (7) K reads रससिद्धि (8) D and K read मम. D reads कृति instead of कृत (9) D and K read दुधिया, which is incorrect. (10) ईदृस नैव जानामि, an incorrect variant in D (11) D and K read erroneously देवी (12) D reads सिद्धि (13) नैव सिद्धि रसायने, a variant in K, which is partly incorrect (14) D reads पूर्वै K reads सर्व. (15) सम्प्रदायो न सिध्यते, a variant in B सम्प्रदानेन सिध्यति a variant in D

न सिध्येद्रसशास्त्रे तु[1] न सिध्येत्तादृशी गुरुः[2] ॥ १८१ ॥
न प्राप्येत्तादृशीमाज्ञा[3] नैव ध्यानं च तादृशम्[4] ।
न प्राप्येत्तादृशीं नारीमेकचित्तां वरानने ॥ १८२ ॥
न प्राप्येद्रसवन्तं च तां च देवीं रसाङ्कुशीम्[5] ।
यस्य तुष्टः शिवः साक्षात्तस्य सिद्धी[6] रसायने ॥ १८३ ॥
पुनरन्यत्[7] प्रवक्ष्यामि गोलबन्धनमुत्तमम् ।
येन भक्षितमात्रेण[8] जायते ह्यजरामरः ॥ १८४ ॥
गन्धाभ्रकान्तसहितं भानुखर्परकाञ्चनम् ।
समं तीक्ष्णं[9] रसेन्द्रस्य बद्धं कृत्वा तु गोलकम् ॥ १८५ ॥
रसेन्द्रं पञ्चपलिकं[10] समभागेन मेलयेत् ।
सम्जम्बीरतोयेन[11] मर्दयेद्गोलकस्य च[12] ॥ १८६ ॥
छायाविशुष्कं गोलं तु शशिभावं करोति तत् ।

---

(1) न सिध्येत्तादृशी शास्त्रे, a variant in D (2) न सिध्येत्तादृशो गुरुः, a variant in D न सिध्येत्ता वरानने, an incorrect variant in K (3) D reads तादृशीं विद्यां (4) ध्यान ध्यान द्रव्यानि तादृश, an incorrect variant in D This hemistich and the next one are not found in K (5) B reads रसाङ्कुशा (6) K reads erroneously सिद्धि (7) B, D and K read पुनरन्य, which is grammatically incorrect (8) येन च चव मात्रेण, a variant in D येन भक्षणमात्रेण a variant in K (9) D reads सम तीक्ष्णं K reads समो तीक्ष्णं Both are partly incorrect (10) रसेन्द्र पञ्चपलिक, an incorrect variant in D (11) B reads समम् कृत्वा K reads समकोष्ण रसो येन (12) यदा तद्गोलकस्य वा, a variant in D गोलकस्य यथाइया an incorrect variant in K.

एतत् सर्व्वं विमर्द्य तु सूतकं गोलकस्य च[1] ॥ १८७ ॥
तत् करीषाग्निना भूमौ मृदुस्वेदं तु कारयेत् ।
वक्त्रे स्थितमिदं गोलं चामरताप्रदायकम् ॥ १८८ ॥
सूतगोलकजातस्य फलं वक्तुं न शक्यते[2] ।
रसायने वर्णकरो[3] रससिद्धिप्रदायकः[4] ॥ १८९ ॥
सुगन्धलेपताम्बूल-कस्तूरीकुङ्कुमागुरु ।
श्रीखण्ड मृगनाभिश्च कक्कोलं जातिकाफलम्[5] ।
अन्यानि च सुगन्धीनि[6] स्नाने पाने प्रदापयेत्[7] ॥ २०० ॥
[कुञ्चिताग्रास्तु यत्केशा[8] या श्यामा[9] पद्मलोचना ।
विस्तीर्णं जघनं यस्याः सङ्कीर्णं हृदयं भवेत् ॥ २०१ ॥
कृष्णपक्षे भवेद्यस्या युवत्याः पुष्पदर्शनम्[10] ।
कामिनी सा समाख्याता[11] उत्तमा च रसायने ॥ २०२ ॥
आलिङ्गने स्पर्शने च मैथुनालापयोरपि ।
सर्व्वरोगविनिर्म्मुक्तो वलीपलितवर्ज्जितः ॥ २०३ ॥][12]

(1) This hemistich and the next two are not found in D (2) This hemistich is not found in B and K (3) D reads वर्त्तकरो K reads वालकरो (4) This hemistich is not found in B (5) D reads जायकाफलम् (6) B and D read सुगन्धानि. (7) स्नान पानानि यानि तु, a variant in B. (8) आकुञ्चिताग्रा यत्केशा, a variant in D and K (9) D reads श्यामाया, which is incorrect K reads श्यामा या (10) D reads erroneously पुष्पदर्शने (11) K reads सख्याता (12) The above three slokas within brackets and the following two slokas within brackets seem to be a repitition of the previous slokas— 165, 166, 167, 168 and 169 As these were found in all the texts, we have kept them within brackets

शतरोग विनश्येत[1] सुखमध्ये घृतेषु च[2] ।
यवतुल्यप्रमाणेषु जीवेद्वर्षशतत्रयम् ॥ २०४ ॥
अथ षोडशवर्षाणि[3] षोडशानि सुरेश्वरि[4] ।
घृतानि सुखमध्ये तु तेषु वक्ष्यामि ये गुणा ॥ २०५ ॥
[नासौ छिद्येत शस्त्रैश्च पावकेन न[5] दह्यते ।
वायुवेगो महातेजा· कामदेव इवापर: ॥ २०६ ॥
इच्छया जायते ह्रस्वो दीर्घश्चैव जायते ।
तस्य संस्पर्शमात्रेण सर्व्वलोहानि काञ्चनम्[6] ॥ २०७ ॥]
पुनरन्य प्रवक्ष्यामि वज्रवन्धं सुरार्चिते[7] ॥ २०८ ॥
हीनाङ्गोऽप्यधिकाङ्गश्च[8] सव्याधि: कुब्ज वामन[9] ।
नताङ्घ्रि:[10] पाणिनि सुतो[11] जरया क्षोभितेन्द्रिय.[12] ।
जडगद्गदमूकोऽपि[13] गतिहीनस्तथैव च[14] ।

---

(1) B reads शतशतेषु पश्चाद्गस्तु, which has no sense (2) K reads मुखमध्ये घृतेष्वथा, wherein the first term is incorrect (3) अथवा षोडशपर्णानि a variant in D. (4) वक्ष्यामि सुरसुन्दरि, a variant in D. (5) D reads पावके नैव (6) Th s hemistich is not found in D (7) B reads सुरेश्वरि (8) B has हीनाङ्गाभ्यधिकाङ्गाय, D has हीनांगा-धिकाङ्गाय K has हीनांगाध्यधिकांगाय, (9) B reads कुब्जमानत D reads सर्वे व्याधिपराजिता K reads कुमानत which is incomplete (10) B reads नताङ्घ्रि (11) जरासंकुलिताङ्गाय a variant in D. (12) जर यस्तो जितेन्द्रिय, a variant in B कामयन्तो जितेन्द्रिया, a variant in D जरायमा-जितेन्द्रिय a variant in K. (13) जन्दमूकादि an incorrect variant in B जडाङ्गमर्दनिर्दोषोपि, a variant in D, which has no sense जडगन्दमूकादि, an incorrect variant in K (14) D reads मूको वाक्सिद्धिहीनश्च · K reads गतिहीनश्चैव च, which is a repitition

शङ्खलचविनिर्मुक्तो[1] जीवितैरेव तिष्ठति[2] ॥ २१० ॥
बद्धस्यास्य प्रभावेन समावर्त्तो यदा भवेत्[3] ।
कोटिवेधि रसं ग्राह्यं पिण्डपट्केन संयुतम्[4] ॥ २११ ॥
एकैकस्य तु मध्यस्थां गुटिकां कारयेद्बुधः ॥ २१२ ॥
गुटिकाः पञ्चसंख्याताः षष्ठी चैव तु पञ्चमी[5] ।
षट्संगुणितपिण्डं स्यात्[6] ताम्रपात्रं सुशोभनम् ।
ऊर्द्ध्व[7] पुरुषमात्रं तु पुरुषार्द्धं च[8] मण्डलम् ।
चतुर्मुखकृतं[9] काष्ठं तस्योपरि निवेदयेत् ॥ २१३ ॥
सघृतं च महातैलं समभागेन लेपयेत्[10] ।
पूजयित्वा कटाहं तु दिक्पालांश्चैव पूजयेत् ॥ २१४ ॥
कुमारीं पूजयेत् पश्चाद्द्याद्दिक्षु बलिं[11] तथा ।
धमनं तत्र कुर्व्वीत चतुर्द्दिक्षु शनैः शनैः ॥ २१५ ॥
सुतप्तं च विधातव्यं[12] निर्धूमं च यदा भवेत्[13] ।

---

(1) D has सुखुत्व च विनिमुक्तौ, which is senseless K has षड्त्व च विनिर्मुक्तौ, which is also absurd (2) जीवेद्ध शरदां शत, a variant in D, which is quite opposite in meaning जीवश्चैवेऽथनिश्चते, a variant in D. (3) D reads सुखमध्ये प्रदापयेत् (4) पिण्डपटकोणसंस्थित', a variant in D and K (5) B reads षष्ठ चैव च पञ्चमम् D reads षष्टा श्च पञ्चम K reads षष्टां चैव तु पञ्चम (6) B reads पिण्डस्था D reads पिण्डे स्यात. (7) B reads ऊर्ध्वं (8) B has पुरुषार्धेच (9) B reads चतुमखे कृत. (10) D reads मिलयेत् (11) D reads ददयादष K reads धर्मौ (12) सत सम्र विधाम तु a variant in D सूर्ते तस्य विधान तु, a variant in K. (13) रक्तवर्णे भवेत्तदा, a variant in D. K reads यथा भवेत्

तदा नत्वा गुरुं देवं[1] चन्द्रार्कादि[2]ग्रहानपि ।
नक्षत्राणि च सपूज्य[3] आत्मानं तत्र निक्षिपेत्[4] ॥ २१६ ॥
पृथिव्यापस्तथा तेजो वायुराकाशमेव च[5] ।
सुदुर्लभं विजानीयात्[6] सिद्धिरूपं नियोजयेत् ॥ २१७ ॥
कललं च भवेत् सर्व्वं पुरश्चापो विनिक्षिपेत्[7] ।
रक्तवर्णं विजानीयात्तेजस्तेजसि योजयेत्[8] ॥ २१८ ॥
मांसपिण्डं भवेत्तत्र वायु[9] तत्रैव निक्षिपेत् ।
कान्तवर्णो[10] तदा कार्य्यं निक्षिपेत् ख कपालके[11] ॥२१९
धमन्त[12] हेमसकाश चारत्न तन्तु[13] पादयेत्[14] ॥ २२० ।
ज्ञात्वा तत्र महाराव[15] चुद्वारं सुरपूजितम्[16] ।
उत्तिष्ठति[17] न सन्देह पुष्टाङ्गो भास्करो यथा ।

---

(1) D has नत्वा गुरु गणपति K has पश्यात् (2) K reads दर्शा which is incomplete (3) B reads ग्रनि पूज्य D reads योगिनीभ K reads ग्रनिपूज्ञां (4) वलि तत्र विनिक्षिपेत् a variant in B. ( D reads वायुराकाशमेव च which is incomplete (6) D reads सदुर्लि B reads सुदुर्लभ विजयेत Both seem to be incorrect (7) D rea पुरश्चापिच which is incorrect (8) B reads तेजे तेजं नियोजयेत् wh c is incorrect (9) D reads यत (10) D reads कान्तवर्णे reads सतदवर्णे (11) B reads तत्र कपोतमे D reads कक्रमिकपो reads कक्रपालिकौ (12) B reads धमत D reads धमन्त K read धमते (13) B has प्रात्तत तत K reads तत (14) B an D read दापयेत् (15) D reads महारावं (16) B reads चक्रार D reads चक्राकार सुपूजितम् (17) B reads उत्तिष्ठते which is no correct K reads उत्तिष्ठति which is also incorrect.

दिव्यतेजा महाकायो दिव्यदृष्टिर्महाबल[1] ॥ २२१ ॥
शतयोजनविस्तीर्णं घण्टारावं सुपूजितम्[2] ।
दीप्तहेममयं दिव्यं रत्नमाणिक्यशोभितम् ॥ २२२ ॥
पुष्पमालापताकाढ्यं[3] किङ्किणीजालमण्डितम् ।
विमानोत्तममारूढं शङ्खकाहलनि.स्वने. ॥ २२३ ॥
अप्सरोगीतवादित्रैर्नृत्यैरपि मनोहरै ।
दिव्याभरणसम्पूर्णा दिव्यमाल्योपशोभिता[4] ॥ २२४ ॥
अपाङ्ग[5]रागसम्पन्ना सुरूपा मदविह्वला[6] ।
आगच्छति न सन्देहो देवकन्योदितं प्रति[7] ॥ २२५ ॥
गृहीत्वा साधकेन्द्रं च सिद्धलोके वसेत्तत.[8] ॥ २२६ ॥
दिव्यानि स्नानपानानि[9] दिव्यान्याभरणानि स ।
रमते शतसाहस्र[10] सिद्धकन्या स्मरातुरा.[11] ॥ २२७ ॥

---

(1) After this sloka we find in D a portion of a work called वीरामिहिर, which being quite unconnected with the pre ent subject, we have rejected (2) K reads क्रमा च शिवपूजित, which has no clear sense (3) K has पुष्पमालायुत कार्यं wherein the last term is incorrect (4) दिव्यमाल्यै सुशोभिता a variant in K (5) B D and K read उपांग (6) B reads दिव्यकामिनी (7) B reads भादेश दीयतामिति D reads देवकन्योन्ति प्रति (8) B reads सिद्ध—अति ता D reads सिद्धलोका वसन्ति च These two readings are partly incorrect K reads शिवलोक वसत्तत (9) K reads यानि पानानि (10) B has रमत only K has रमते (11) D and K read स्मरातुराम् which is incorrect as there is सिद्धकन्या in plural number

तस्मिन्नेकार्णवे घोरे नष्टस्थावरजङ्गमे ।
देवा यत्र[1] विलीयन्ते सिद्धस्तत्रैव लीयते ॥ २२८ ॥[2]
भूतकालान्तको नाम चण्डोऽयमुपवर्णितः[3] ॥ २२९ ॥
तत्त्वतोऽयं[4] महादेवि यदा कर्त्तुं न शक्यते ।
अनेनैव शरीरेण तदा[5] सिद्धिर्भविष्यति ॥ २३० ॥

इति श्रीपार्वतीपरमेश्वरसंवादे[6]
रसार्णवे रससंहितायां
देहवेधो नाम[7]
अष्टादशः पटलः ।

॥ समाप्तश्चायं ग्रन्थः[8] ॥

---

(1) B reads भुवनानि (2) This sloka is a repitition of the previous sloka No 170 (3) चन्द्रोऽयमुपवर्जित, an incorrect variant in D (4) कृ यथाय a reading in D. तथाय a reading in D तत्त्वाय a reading in K (5) D and K read यदा (6) B and D want this portion (7) D reads इमविधो नाम, which is incorrect (8) B has ॥ इति गौरसंहितायां रसार्णवं सम्पूर्णम् ॥

# एतद्ग्रन्थसङ्कलनम्।



काश्मीराद्दक्षिणावर्त्तात् विकानीराच्च देशत.।
मान्द्राजाच्चैव नगरात् बहुवित्तोपघातत.॥
प्रफुल्लचन्द्ररायेण रसायनविपश्चिता।
श्रीमता धीमताहृत्य तन्त्राणि बहुयत्नत॥
तेषान्तु बहुदोषाणामशुद्धानाञ्च वर्णत।
पाठापाठविवेकाय विशुद्धीकरणाय च॥
नियुक्तः श्रीहरिश्चन्द्र कविरत्नाभिधो द्विजः।
रसार्णवमिमं ग्रन्थं कलयामास यत्नत॥
कलिकातापुरे चन्द्रनेत्रवस्विन्दुसम्मिते।
शाके ग्रन्थ समाप्तोऽयं तपोमासीन्दुजे दिने॥



N B. The reader is requested to consult the Table of Errata and variants before referring to this Index

# अ

८७ ( Red ) ३२४, ( Yellow ) ३२५, ३८६, ४०६ &c

अरुणोत्पल ( Red lotus ) ७०

अर्क (Calotropis gigantea, Beng ákanda ) ७४, १२१, १२२ &c

अर्कक्षार (Alkali of ákanda) ७४

अर्कक्षीर (Milky juice of ákanda) ८७, ११६, ११८ &c

अर्कदुग्ध (See अर्कक्षीर) ८७ १०० ३५७

अर्कपत्री (अर्कपत्रिका) (=ईश्वरमूल Beng isher múl) ६१

अर्कपय: (See अर्कक्षीर) ३४८

अर्जुन ( Terminalia arjuna, Bedd , Beng arjun) १९८

अर्जुनक्षार (The text अर्जुन means here अर्जुनक्षार or Alkali of arjuna ) ७४

अर्जुनी (=खालासुरी=रक्तचित्रक —रसकामधेनु) ६३, ३८४

अलक ( =देवदाली—रसकामधेनु, see देवदाली ) ११८

अलक ( d r आलक, हरिताल, see ताल ) ४२६

अलम्बुषा ( A sort of लज्जालुका, a sensitive plant ) १६०, ४१८

अलर्क ( Calotropis gigantea alba or procera, Beng sveta (white) ákanda) १८५

अश्मदलनी ( =अश्मभेदक, Beng patharchúr) १३१

अश्वगन्धा ( Withania somnifera, Dunal, Beng asvagandhá) १२२, ३८८

अश्वत्थ ( Ficus religiosa, Linn , Beng asvattha) ८६

अश्वमार (=श्वेत करवीर, Beng, white karabí ) ३५०

अष्टमूलिका ( Eight plants used for the purification of mercury) ६३

असन ( Terminalia tomentosa, W and A , Beng piásál ) ६६

अस्थिश्रृङ्खल (=अस्थिसंहार Vitis quadrangularis, Wall., Beng hádjoda ) ८६

अहि (See नाग ) १८८, २७७

अहिमर ( See अहिमार ) २६८

अहिमार (—विट्खदिर Acacia

once killed, mercury ) १५०, १६३, १६५, ३५४, ३८१, ४०१&c.

आर्द्रक (Zingiber officinale Rose Beng. ádi ) ६४, १४४ &c.

आवर्त्तक ( =रौप्यमाक्षिक, see माक्षिक ) ८८

आवाप ("द्रुते द्रव्यान्तरक्षेपो लौहाद्यो क्रियते हि यः, स आवापः" रस स Throwing other things to the molten metals see वाप and परिवाप) ११६, १२१

आशुगपुङ्ख ( See शरपुङ्ख ) १८५

आसुरी ( See आसुरीलवण ) १७०, १८७

आसुरीलवण (=विडलवण, Ka'á nimak, Beng. bitlavana ) १५२

आस्फोट ( See अर्क, it means also akhrot=Juglans regia) १६०

## इ

इङ्गुद ( See इङ्गुदी ) ३८७

इङ्गुदी ( Balanites Roxburghii, Planchon, Beng ingot ) ११८ ३८८

इङ्गुदीफल ( Fruit of इङ्गुदी ) २५८, २६०, २७०

इन्दुरी (=इन्दुरा, सोमराजी, see वाकुची. Vernonia anthelmintica Willd. Beng somarái ) ६२

इन्दुरेखा (=सोमराजी, see वाकुची) ८६

इन्द्रगोप ( Coccinella of various kinds ) १३४ १७८, ३७४ &c

इन्द्रगोपक (See इन्द्रगोप) १०४, ३५६

इन्द्रवारुणी ( Citrullus colocynthis, Schrad, Beng. indrajava ) ६०, ८८, २६१, ३४१, ३५० &c

इष्टका, इष्टिका (A brick or brick-dust ) १८७,—१५४, १६६, &c.

## ई

ईश्वरी ( A sort of creeper called वन्ध्याकर्कोटकी, "भूरिक्षीरपरिसावा"—रसकामधेनु) ६१ ३५५

usitatissimum, Linn, Flax, Beng. Masiná) ७१

उरग (See नाग) १०२, १०३ &c

उरगा (=नागी—वन्ध्याकर्कोटकी, Beng. Titkánkdi, d r तुरगी=अश्वगन्धा) १५२

उलूखल (A wooden mortar, Beng udukhal) ४२

उषण (=शुण्ठी. Dry ginger, Beng sunth) १५५

उष्णोद (A hot mineral water) २५०

उष्णोदक (See उष्णोद) २४७, २५०

ऊ

ऊर्णा (Wool, felt &c. the hair of sheep, deer, camels &c) १०३, ११४ १३२, १५३ &c

ऊर्ध्वपातन (A sort of apparatus resembling Patana yantra, see Ray's Hindu Chemistry, Vol I, p 122) १५४

ऊषण (=मरिच Black pepper) १५५

ए

एकपर्णिका (=एकपत्रिका, Beng gandhasati) ५८

एकवीरा (=वन्ध्याकर्कोटी) ५९

एकवीराकन्दरस (Watery juice of the root stock of एकवीरा) २१४

एरण्ड (Ricinus communis, Linn, Beng bheránda) १४२, १६१

एरण्डतैल (Oil of bherándá, castor oil) ६६, ६८, १०९

एरण्डवृक्ष (Plant called एरण्ड, see एरण्ड) ८८

ओ

ओषधि (An annual plant or deciduous herb) ४२

ओषधी (See ओषधि) ५६, १६४

औ

औमदण्ड (Stem of masiná tree or flax stem) ७१

क

कटुकोषातकी ( A sort of bitter ghoshálatá, see कोषातकी ) ३३२

कटुतुम्ब ( See कटुतुम्बी ) १७२, १७६

कटुतुम्बी ( A wild variety of Lagenaria vulgaris, Sering, Beng titláu) ६०, १३९ २२६

कटुतैल (Mustard oil) १३१, ३६२

कटुत्रय ( =त्रिकटुक The aggregate of three spices—ginger, long pepper and black pepper, Beng. shunth, pipul and marich) ११४, १४३ २५८

कण (=पिप्पली Piper longum, Linn, Beng pipul ) ४०१

कण्टकारीरस (Juice of कण्टकारी =Solanum xanthocarpum, Schrad ) ३०९

कण्डूलसूरण ( Itchy सूरण= Amorphophallus campanulatus, Blume, Beng buno ol) ८७

कतक ( Strychnos potatorum, Linn, Beng nirmali ) १०२

कदम्बक (=माक्षिक See माक्षिक) २९९

कदली ( Musa sapientun, Linn, Beng kalá) ६२ ६४, १२१, १४२, १६०, ४१९ &c.

कदलीकन्द ( Root stock of the plantain tree Beng kalar ete) ९७, १३०, ३०९ &c.

कदलीकन्दक (Root stock of plantain tree ) ७४

कदलीकन्दतोय ( See कदलीकन्द निर्य्यास) १३०

कदलीकन्दनिर्य्यास (Watery juice of the root-stock of the plantain tree) १६१

कदलीकन्दसार ( See कदलीकन्द निर्य्यास ) ९७, ११३

कदलीरस (Juice of the plantain) ९६ ९७, ९९

कनक ( Gold ) १२४, १३०, १७०, १७२, २४५, २६१, २९४, ४१३ &c.

कनक ( A sort of dhuturá called kanak dhuturá ) ३३२, ३४१, ३५० ३६४ &c

phantum, Corr, Beng kathbel ) २७१

करञ्जाख्य ( See करञ्ज ) १३६

करवीर ( Nerium odorum, Soland, Beng karabí, also *a sort of creeper* "हयमार समाकारा लता पुष्पसमन्विता, करवीरलतेत्युक्ता"—रसकामधेनु) ६५, ७० ८७

करवीरक ( See करवीर ) ३८२

करिन् ( See नाग ) ३०६

करियाग्नि ( A fire of dry cow dung ) ३४३

करीषाग्नि (See करिषाग्नि) ४४ ४३१

कर्कट (—कर्कटक A sort of कन्द विष ) १३७

कर्कटास्थि ( *Crab-shell* ) ८६ ८७ ३१०

कर्कटी ( A sort of cucumber, Cucumis Melo Linn, Beng kánkud) ४१८

कर्कोटि ( See कर्कोटी ) ४१६

ककाटी ( —ककाटिका Beng *kánkrol*) ६० २४४

कर्कोटीकन्द ( Fllo under ground stem of कर्कोटी) २१५

कषाख्य ( =श्वेतझिण्टी White Barleria cristata ) १४२

कर्त्तरी (A sort of महौषधि) २२४, (origin of) २३५, (varieties of) २३५—२२६

कर्दम (=पङ्क "सदया मर्द्दिता चैव (कज्जली) पङ्क इत्यभिधीयते'—रसकामधेनु) २७२

कर्पूर ( Camphor ) ६ ८४, १७०, ३३७, ४१७

कर्षक ( A sort of kánta or kántapáshána, see कान्त पाषाण) ७६ ३६६

कर्षाग्नि (See करिषाग्नि) ४४ ३४६

कर्षानल (See करिषाग्नि) १८६

कमल (The uterus, the embryo, here it means मांसपिण्ड) ४३४

कल्क (A paste prepared by grinding dry or fresh vegetable substances on a stone with a muller and then making a thin paste with the addition of water when necessary) ("य पिण्डचार्द्रद्रव्याणां

काचकिट्ट (=काचमल. Excretion of mica mixed with saline earth, Beng malamati) ९६
काचकूपी (Glass bottle) १८४
काञ्चन (Gold) (See सुवर्ण) ११५
काञ्चन (Bauhinia acuminata, Linn, Beng. kánchan) १४२
काञ्चनार (Bauhinia variegata, Linn., Beng rakta kánchan) ३०८, ४२०
काञ्चनी (Turmeric. Curcuma longa, Roxb., Beng halud) ५६
काञ्जिक (A sour gruel prepared from the acetous fermentation of powdered paddy and other substances, see धान्याम्ल) ४३, १२१, १५३ &c
काञ्जिकाम्ल (Boiled rice steeped in काञ्जिक, see काञ्जिक) ४१६
काञ्जी (See काञ्जिक) १६५
कान्त, कान्तक (See कान्तपाषाण) (Varieties of) ७६,८६,४०३,४२७
कान्तचूर्ण (Powdered कान्त, see कान्त) ४१३
कान्तचूर्णवृष्टि (A smallest portion of कान्तचूर्ण, see कान्तचूर्ण) ४२८
कान्तातीक्ष्ण (A sort of cast iron called कान्तलोह) २६२
कान्तनाग (The best कान्त—सर्व्वतोमुख कान्त, see p. ७७) ७६
कान्तपाषाण (A sort of stone called कान्त—as loadstone) ६८, ८३, ३१०, ३५१ &c
कान्तबन्ध (Binding of कान्त or loadstone) ३२५
कान्तमुख्य(The best कान्त—सर्व्वतोमुखकान्त, see p. ७७) १३५
कान्तलोह (Cast iron, Beng. kántilohá, d r. कान्तिलोह, काललोह इति रसकामधेनु) ११७, १८२, ४०३
कान्ता (A plant called priyangu or krishnakali, d r. क्रान्ता) १५२
कान्ताकान्त (d. r. कान्तिकान्त, कान्तिलोह, see कान्तलोह) २६८
कान्तसत्त्व (Essence of कान्तपाषाण) १६६, ४१४

कालिका (A sort of impurity (दोष) of mercury or metals or minerals, see पारददोष) १०५, २११, ३८२

कालिङ्ग (Water melon Beng tarmuj) ४१८

काशीस (Ferrous Sulphate, Sulphate of iron of two varieties—dhátukásísa = green vitriol, and pushpakásísa = yellow vitriol, Beng hirákas) १२०, १४१ &c

काशीसशुद्धि (Purification of काशीस) ११२

काश्मीरद्रव (Fluid of कुङ्कुम or crocus sativus, Linn) २२१

काश्मीरिपाषाण (Stone of Kásmir) २२०

कासमर्द (Cassia Sophora, Linn, Beng kálkásundí) ४२, ११२

कासीस (See काशीस) ८६, ९९ &c

किंशुक (Butea frondosa, Roxb, Beng palása having flowers of 4 colours—red, yellow, white and blue; see पलाश) ६६, १३८ &c.

किंशुकद्रव (Fluid of किंशुक) १४२

किंशुकरस (*Juice of* किंशुक) ३८२

किट्ट (A rust of iron called mandura) ४८

कीट (Worm) ४०१

कीटमारी (=रक्तलज्जालुका red lajjávatí, d r सिंहतुती) ७०२

कीलालरस (Juice of शल्लकी or Boswellia serrata, Roxb) ८३

कुक्कुटी (=शाल्मली Bombax Malabaricum, D C, Beng. simul) ५८

कुक्कुटीकन्द (d r कर्कोटीकन्द, *under ground stem of* कुक्कुटी, see कुक्कुटी) ३५५

कुङ्कुम (Saffron) ६, ६६, १८४, ४२०, ४३१

कुञ्जर (See नाग) ३०१

कुटिल (=वङ्ग=वङ्ग Tin, Beng ráng) १०२, ११०, १८१, २९४, ४२३

